पंचलवण

नवसादर

शोरा

सुहागा

सर्व लवण सम भाग

इन लवणों के

नवसारादि तीनों मिलकर बराबर हो।

इनको डमरू यन्त्र में ऊर्द्धपातन

कर शीशी में दे योगी चेका मला है।

ऐसें भसमन्या में दे

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

( गुड़हरूकेवालाग्निमान्द्यो )

जीरा स्वेत तो॰ १

सुंठी तो॰ १

मरिच तो॰ १

पिपाली तो॰ १

अमचूर तो॰ २

गुड़ तो॰ ६

लौंग मा॰ ६

सेंधा नमक तो॰ १

१॥ दद्रुमें अनुभूतयोग

पवाड़बीज तो॰ १

सुहागा तो॰ १

गन्धक आमलसार तो॰ १

पीली सरसों तो॰ १

ताला तो॰ १ जलेन वटिका

कालेवू घिस्वा लेपः कार्यः

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

# नाड़ीविज्ञानम् ।

महामुनि कणादविरचितम् ।

स्व. डा. निगम शर्मा स्मृति संग्रह
पूर्व अध्यक्ष संस्कृत विभाग
गुरुकुल काँगड़ी विश्वविद्यालय, हरिद्वार

पण्डितकुलपतिना,

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया समलङ्कृतम् ।

द्वितीयसंस्करणम् ।

कलिकातानगरे

कलिकाता यन्त्रे

मुद्रितम् ।

इं १८९७ ।

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

# नाड़ीविज्ञानम् ।

महामुनि कणादविरचितम् ।

पण्डितकुलपतिना,
वि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
विरचितया व्याख्यया समलङ्कृतम् ।

द्वितीयसंस्करणम् ।

कलिकातानगरे
कलिकाता यन्त्रे
मुद्रितम् ।

ई १८९७ ।

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

# नाड़ीविज्ञानम्।

यद्वक्त्रेभ्यः पञ्चसंख्या गतेभ्यो
वेदा जाता ऋग्यजुःसामरूपाः।
सायुर्वेदोऽथर्ववेदश्च तस्मिन्
आस्तां शम्भौ श्रीकणादस्य भक्तिः॥ १॥

टीकाकृतः मङ्गलाचरणम्।

नत्वा वाणीं सरसिजवसां बिभ्रतीं शुभ्रकान्तिम्
जीवानन्दो द्विजकुलभवः श्रीयुतो सुग्धवीनाम्।
सच्छात्राणां मतिविकशनात् नाड़िविज्ञाननाम्नः
सम्यग् यत्नात् रचयतितरां पुस्तकस्यास्य टीकाम्।

इह खलु महामुनिः कणादः ग्रन्थस्य निर्विघ्नपरिसमाप्तये मङ्गलमाचरति। यदिति पञ्चसंख्यागतेभ्यः पञ्चपरिमितेभ्यः यद्वक्त्रेभ्यः यस्य वक्त्रेभ्यः आस्येभ्यः पञ्चमुखेभ्यः इत्यर्थः। वेदाः श्रुतयः जाताः बहिर्गताः भुवि प्रचारिताः। ते हि कतिविधाः? कानि वा तेषां नामधेयानि? इत्यत आह। ऋगिति। ऋक्च यजुश्च साम च इति ऋग्यजुःसामानि, तानि एव ऋग्वेदा यजुर्वेदा सामवेदाश्च। तथा आयुर्वेदेन सह वर्त्तमानः इति सायुर्वेदः, स चासौ अथर्ववेदश्च इति। सायुर्वेदाथर्ववेदः, अत्र सहशब्दस्य पृथक्साहित्यं बोध्यम्। पित्रा सह गतः पुत्रः इत्यादिवत्। एवं सति आयुर्वेदस्य अथर्ववेदान्तर्गतत्वं द्योतितम्। इति पञ्चधा वेदाः जाताः भुवि प्रचारिताः,

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

आस्ते वेदः पञ्चमो वैद्यकाख्यो
वेत्ता कश्चित् तस्य नास्ते महेशात्।
तस्माद्धाताऽध्यैष्ट तस्मात् तुराषाट्
तस्माज्ज्ञात्वा वक्तुमर्हामि शास्त्रम् ॥ २ ॥
सार्द्धत्रिकोट्यो नाड्यो हि स्थूलाः सूक्ष्माश्च देहिनाम्।
नाभिकन्दनिबद्धास्तास्तिर्य्यगूर्द्धमधःस्थिताः ॥३॥

तस्मिन् शम्भौ श्रीकणादस्य भक्तिः पूज्येषु अनुरागः आस्तां तिष्ठतु; प्रार्थनायां लोट्। सत्यां च तस्मिन् भक्तौ मम उद्योगः सर्वथा सफलीभविष्यति इति भावः ॥ १ ॥

वैद्यकाख्यः वैद्यको नाम पञ्चमः वेदः आस्ते। किन्तु कश्चित् कोऽपि मानवः महेशात् शम्भोः तस्य वैद्यकाख्यस्य वेदस्य वेत्ता ज्ञाता नास्ते नास्ति इत्यर्थः। ननु कुतः आविर्भावः तस्य ? इत्यत आह धाता ब्रह्मा तस्मात् महेशात् अध्यैष्ट पठितवान्। तमेव गुरुत्वेन निर्णीय तज्ज्ञानं लेभे इत्यर्थः। तुराषाट् इन्द्रः तस्मात् ब्रह्मणः अध्यैष्ट ब्रह्मैव इन्द्रस्य गुरुरित्यर्थः। अहन्तु तस्मात् तुरासाहः सकाशात् ज्ञात्वा विदित्वा शास्त्रम् इदं नाड़ीविज्ञानरूपं वैद्यकाख्यं वक्तुम् अर्हामि शक्नोमि इत्यर्थः ॥ २ ॥

सार्द्धेति। देहिनां प्राणिनां देहेषु स्थूलाः परिणतावयवाः सूक्ष्माः प्रतनवः सार्द्धत्रिकोट्यः अर्द्धकोट्या सह त्रिकोट्यः अत्र अभ्यासवृत्तौ बहुवचनम्। यत्तु विंशत्यादेरेकत्वं तदनभ्यासवृत्तौ इति बोध्यम्। नाड्यो हि सन्ति, इति शेषः। ता नाड्यो नाभिकन्दे नाभिमूले निबद्धा दृढमूला अथवा नाभौ

द्वासप्ततिसहस्रन्तु तासां स्थूलाः प्रकीर्त्तिताः।
देहे धमन्यो धन्यास्ताः पञ्चेन्द्रियगुणावहाः॥ ४॥

तासाञ्च सूक्ष्मसुषिराणि शतानि सप्त,
स्युस्तानि यैरसकृदन्नरसं वहद्भिः।
आप्याय्यते वपुरिदं हि नृणाममीषाम्
अम्भः स्रवद्भिरिव सिन्धुशतैः समुद्रः॥ ५॥

कन्दं मूलं निबद्धं यासां, तास्तिर्य्यग्भावेन ऊर्द्ध्वभावेन अधोभावेन च स्थिता विन्यस्ताः॥ ३॥

द्वासप्ततीति। तासां सार्द्धत्रिकोटीनां नाड़ीनां मध्ये द्वासप्ततिसहस्रं द्वासप्ततिसहस्रसंख्यका नाड्यः स्थूला इति महत्तराः परिणतावयवा धमन्य इति कथिता उक्ताः। ताधमन्यः पञ्चेन्द्रियाणां चक्षुःकर्णनासिकाजिह्वात्वचां ये गुणा रूपशब्दगन्धरसस्पर्शास्तान् आवहन्तीति आवहास्ता धन्याः प्रधानाः। यदुक्तं सुश्रुतेन शारीरस्थाने तासान्तु नाभिप्रभवाणां धमनीनामूर्द्ध्वगा दश, दश चाधोगामिन्यश्चतस्रस्तिर्य्यग्गाः। ऊर्द्ध्वगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुधितहसितकथितरुदितादीन् विशेषानभिवहन्त्यः शरीरं धारयन्ति। तास्तु हृदयमभिप्रपन्नास्त्रिधा जायन्ते तास्त्रिंशत्। तासान्तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश। शब्दरूपरसगन्धानष्टाभि र्गृह्णीते। द्वाभ्यां भाषते च, द्वाभ्यां घोषं करोति, द्वाभ्यां स्वपिति, द्वाभ्यां प्रतिबुध्यते। द्वे चाश्रुवाहिन्यौ, द्वे स्तन्यं स्त्रिया वहतः स्तनसंश्रिते। ते एव शुक्रं नरस्य स्तनाभ्याममभिवहतः एवं त्रिंशदिति॥ ४॥

तासामिति। तासां द्वासप्ततिसहस्राणां नाड़ीनां मध्ये

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

आपादतः प्रभृति गात्रमशेषमेषा-
मामस्तकादपि च नाभिपुरःस्थितेन।
एतन्मृदङ्ग इव चर्मचयेन नद्धम्
कायं नृणामिह शिराशतसप्तकेन॥ ६॥

शतसप्तानां मध्ये
चतुरधिकाविंशतिः स्फुटास्तासाम्।
एका परीक्षणीया या
दक्षिणकरचरणविन्यस्ता॥ ७॥

सप्तशतानि सूक्ष्मशुषिराणि तनुच्छिद्राणि स्यु र्भवेयुः, असकृत् निरन्तरम् अन्नरसं भुक्तद्रव्यरसं वहद्भिर्यैः शुषिरैरमीषां नृणाम् इदं वपुः शरीरम् अम्भः स्रवद्भि र्जलं चरद्भिः सिन्धुशतैः सिन्धूनां शतैः यद्वा सिन्धवश्च सिन्धवश्च इति एकशेषे सिन्धवः नदाः नद्यश्च तच्छतैः समुद्र इव आप्याय्यते प्रपूर्य्यते॥ ५॥

आपादत इति। इह पृथिव्याम् एषां नृणां आपादतः आङ्मर्य्यादावचने इति पञ्चम्यास्तसिल्। आचरणात् प्रभृति आमस्तकात् मस्तकपर्य्यन्तम् अशेषगात्रं सर्वशरीरं व्याप्य शिराशतसप्तकेन शिरासप्तशतकेन सप्तशतनाड्या इत्यर्थः। एतत् कायं देहं चर्मचयेन चर्म्मणां चयस्तेन चर्मसमूहेन चर्म-रज्ज्वा इत्यर्थः, मृदङ्ग इव नद्धं बद्धम्॥ ६॥

शतसप्तानामिति। तासां शतसप्तानां नाड़ीनां मध्ये चतु-र्विंशतिः नाड्यः स्फुटा व्यक्तास्तिष्ठन्ति। तासां चतुरधिक-विंशतीनां मध्ये या एका सा एव नाड़ी परीक्षणीया। सा किम्भूता? दक्षिणकरचरणविन्यस्ता, दक्षिणकरादारभ्य दक्षिणचरणं व्याप्य विन्यस्ता इति बोद्धव्या। प्राधान्यात्

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

तिर्य्यक्कूर्म्मो देहिनां नाभिदेशे,
वामे वक्त्रं तस्य पुच्छञ्च याम्ये।
ऊर्द्ध्वे भागे हस्तपादौ च वामौ,
तस्याधस्तात् संस्थितौ दक्षिणौ तौ ॥ ८ ॥

वक्त्रे नाड़ीद्वयं तस्य पुच्छे नाड़ीद्वयं तथा।
पञ्च पञ्च करे पादे वामदक्षिणभागयोः ॥ ९ ॥

दक्षिणशब्दोऽत्र पुरुषस्य इत्यर्थात् स्त्रियास्तु वामकरोपचारादिति शेषः। चतुरधिकेति प्रस्तुतत्वात् तदुक्तम्।
तदुक्तम् वामभागे स्त्रिया योज्या नाड़ी पुंसस्तु दक्षिणे।
इति प्रोक्ता मया देवि ! सर्वदेहेषु देहिनाम् ॥
अस्यार्थः। स्त्रिया वामभागे पुंसस्तु दक्षिणभागे नपुंसकस्य तु स्त्रीपुंसयोरन्यतमाकारप्रकारमपेक्ष्य साम्ये किं स्यात्? साम्यन्तु न स्यात् क्लिबस्य प्रकृतिस्थितेति विशेषः। कूर्मावस्थितिभेदेनैव स्त्रीपुंसयोर्वामदक्षिणतः परीक्षा ॥ ७ ॥

देहिनां प्राणिनां नाभिदेशे नाभिस्थले तिर्य्यक् वक्रभावेण कूर्मः कच्छपस्तद्वदवयवविशिष्टः नाड़ीचक्र इति अस्ति, तस्य कूर्मावयवविशिष्टस्य वामे वामपार्श्वे वक्त्रं मुखं, याम्ये दक्षिणपार्श्वे पुच्छं लाङ्गूलमिति ऊर्द्ध्वे भागे वामौ हस्तपादौ, तस्य कूर्मस्य अधस्तात् निम्नभागे दक्षिणौ हस्तपादौ स्याताम् ॥८॥

करे यत् पञ्चोपादानं तत् सम्यक् प्रमाणानुरोधात् एकाचरिता अर्थत्वात्। एकेति एकस्या एव पाणिपादमध्यविन्यासात् दक्षिणेति प्राधान्येन पुरुषाश्रयत्वम्।

वक्त्र इति। तस्य कूर्मस्य वक्त्रे मुखे नाड़ीद्वयं तथा पुच्छे लाङ्गूले च नाड़ीद्वयं वामदक्षिणभागयोः करे हस्ते, पादे चरणे

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

वातं पित्तं कफं द्वन्द्वं सन्निपातं रसं त्वसृक्।
साध्यासाध्यविवेकञ्च सर्वं नाड़ी प्रकाशयेत् ॥१०॥

सव्येन रोगधृतिकूर्परभागभाजा,
पीड्याथ दक्षिणकराङ्गुलिकात्रयेण।
अङ्गुष्ठमूलमधिपश्चिमभागमध्ये,
नाड़ीं प्रभञ्जनगतिं सततं परीक्षेत् ॥११॥

थ, वामे करे दक्षिणे करे पादे चेत्यर्थः। पञ्च पञ्च नाड्यः सन्ति ॥९॥

वातमिति। पृथक् शब्दं द्वन्द्वसन्निपातान् रसं रसधातुम् असृक् रक्तं, तुशब्दात् मांसादिधातुर्विज्ञेयः, रसादिसप्त बोधयति। चकारेण एतत्कृतविकाराणामेषाञ्च साध्यासाध्यविवेकं सर्वं नाड़ी प्रकाशयेत्। सन्निपातं त्रिदोषजमिति सामान्यतः। साध्यासाध्यमिति विशेषतश्च इत्यर्थः। सर्वमित्येतदन्यच्च रोगादिकम् इत्युपसंहारः। पृथक् वातं पित्तं कफं द्वन्द्वं द्विदोषं रसं रसधातुं रक्तं, तुशब्दात् रसरक्तभिन्नं मांसमेदोऽस्थिमज्जप्रभृतिपञ्चधातवो बोद्धव्याः। नाड़ी एवं सर्वं प्रकाशयेत् प्रबोधयेत् ॥ १० ॥

परीक्षणीयमाह सव्येनेति। सव्येन वामकरेण किम्भूतेन रोगधृतिकूर्परभाजा, रोगधृतिर्गदधारणं स्थानं, कूर्परः कफोणिदेशः, रोगाणां वातादिदिग्धानां विहातकृतगतिमतां धृतिर्धारणं यत्र कूर्परे स रोगधृतिकूर्परस्तस्य भागः, समुदितकफोणिस्तथा भजते इति रोगधृतिकूर्परभागभाक्, तेन रोगधृतिकूर्परभागभाजेति। परीक्षाकालेऽपि तत्रैव हस्तस्थितये दक्षिणकराङ्गुलित्रयेण आपीड्य अर्थात् नाड़ीम्। एत-

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

परीक्षाकालमाह।

**प्रातः कृतसमाचारः कृताचारपरिग्रहम्।**
**सुखासीनः सुखासीनं परीक्षार्थमुपाचरेत् ॥१२॥**

आपोड़नं पौर्वापर्य्यबोधार्थम्। अथेत्यापीड़नान्तरं परीक्षा न तु परीक्षाकालेऽपि आपोड़नस्थितिः। दक्षिणेति प्रायिकं स्वपरीक्षायां अन्यथादर्शनात् त्रयेणेति योग्यतया तर्जनी-मध्यमानामिकानां ग्रहणम्। पश्चिमेति अङ्गुष्ठस्याधोभागः। मूलेति क्षुद्रग्रन्थिप्रान्तभागमारभ्य मध्य इति अङ्गुलिद्वयपरि-मितमूले। तदुक्तं "अङ्गुष्ठस्य तु मूले या सा नाड़ी जीव-साक्षिणीति। तस्या गतिवशात् विद्यात् सुखं दुःखञ्च देहि-नाम्"। प्रभञ्जनगतिं प्रभञ्जनस्य वायोर्गतिर्यत्र एतेनैवं बोधयति। पित्तश्लेष्मणो गतेरभावः। "पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः" इति, वातप्रेरिता या गतिर्नान्यार्थेत्यर्थः। सततमिति सुस्थदशायामपि।

सव्येनेति। रोगिणां रोगाणां छलिर्धारणं यत्र स एव कूर्परः भुजमध्यग्रन्थिः, तस्य भागं स्थानं भजति यत् तेन सव्येन नाड़ीपरीक्षकस्य वामकरेण आपीड्य नाड़ीं मर्दयित्वा अथ अनन्तरं दक्षिणकराङ्गुलिकात्रयेण नाड़ीपरीक्षकस्य दक्षिण-हस्ताङ्गुलिकात्रयेण तर्जनीमध्यमानामिकाङ्गुलिभिरित्यर्थः। अङ्गुष्ठमूलमधिपश्चिमभागमध्ये अङ्गुष्ठमूलमणिबन्धयोर्मध्य-स्थले सततं निरन्तरं वातादिपरीक्षार्थं प्रभञ्जनगतिं प्रभञ्जनः वातः स एव गतिर्यस्याः तां नाड़ीं परीक्षेत्। देहमध्ये मल-धातवो ये सन्ति ते सर्वे अचला वायुना चलन्ति ॥११॥

प्रातरिति। समाचारः सम्यगाचरिताचारः वैद्य इति

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

तैलाभ्यङ्गे च सुप्ते च तथा च भोजनान्तरे ।
तथा न ज्ञायते नाड़ी यथा दुर्गतमा नदी ॥१३॥
अङ्गुष्ठस्य तु मूले या सा नाड़ी जीवसाक्षिणी ।
तस्या गतिवशात् विद्यात् सुखं दुःखञ्च रोगिणाम् १४

यावत् कृतः प्रातःकालीनमलादित्यागविधिरित्यर्थः । कृताचारपरिग्रहं रोगिणं सुखासीनः सुखोपविष्ट इत्यर्थः । सुखासीनं एवं प्रातरिति प्रशस्तः कालः । "मध्याह्नेऽप्युष्णतान्विता सायाह्ने धावमाना च" इति वचनात् व्यक्तमन्यत् ।

प्रातरिति । प्रातः प्रातःकाले कृतसमाचारः कृतः सम्पन्नः समाचारः सम्यक्प्रकारेण मलमूत्रादित्यागपूर्वकं मुखप्रक्षालनादिकार्य्यं येन तथोक्तः सुखासीनः परीक्षार्थिनः समीपे सुखोपविष्टः भिषक्कृताचारपरिग्रहं कृतः सम्पन्नः आचारपरिग्रहः प्रातःकृत्यादिकार्य्यं येन तथोक्तं सुखासीनं सुखोपविष्टं नाड़ीपरीक्षार्थिनं परीक्षार्थं वातपित्तकफानां न्यूनाधिकविवेचनार्थम् उपाचरेत् संस्पृशेत् । मध्याह्ने उष्णतया सायाह्ने धावमानया इत्याशङ्कायां नाड़ीपरीक्षाकालः प्रातरेव प्रशस्तः ॥ १२ ॥

तैलेति । स्नेहमात्रोपलक्षणम् । सुप्त इति निद्राकाले भोजनान्तरे, भोजनमध्ये भोजनावसानमात्रे च ।

तैलाभ्यङ्ग इति । तैलाभ्यङ्गे घृततैलवसादिमर्दने, सुप्ते निद्राकाले तथा भोजनान्तरे भोजनमध्यसमये चकारात् भोजनावसाने दुर्गतमा नदीव नाड़ी न ज्ञायते न अनुभूयते ॥ १३ ॥

अङ्गुष्ठस्येति । अङ्गुष्ठं हस्ताङ्गुलिसंज्ञितं तन्मूले तर्जनीनिवेशस्थाने या नाड़ी सा जीवसाक्षिणी जीवज्ञापनी, जीवस्य

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

स्नायुनाड़ी वसा हिंस्रा धमनी धामनी धरा।
तन्तुकी जीवितज्ञा च शिरा पर्य्यायवाचिकाः ॥१५॥
आदौ च वहते वातो मध्ये पित्तं तथैव च।
अन्ते च वहते श्लेष्मा नाड़िकात्रयलक्षणम् ॥१६॥
वाताधिका वहेत् मध्ये त्वग्रे वहति पित्तला।
अन्ते च वहते श्लेष्मा मिश्रिते मिश्रलक्षणा ॥१७॥

प्राणस्य साक्षिस्वरूपा प्रत्ययकारिणीति। रोगिणामित्युपलक्षणं सुस्थानामपि ॥ १४ ॥

स्नायुरित्यादि। दश नामानि स्पष्टार्थम् ॥ १५ ॥

आदाविति। आदौ कफोणिपीड़नं द्वितीयचरणे चकारस्यार्थः। न तु तर्जनीनिवेशस्थाने अर्थवशात्। मध्यमनिवेशस्थानमेव तत्र युक्तिमाह। मध्यमाङ्गुलभागस्य समत्वात् दैर्घ्यात्वादौ स्पर्शः, असमत्वाच्च तदनु तर्जन्या अन्ते अनामिकया इति गुरवः।

आदौ मध्ये अन्ते च यदुक्तं तद्दोषाणां वायुपित्तकफानां कालनिरूपणं ज्ञेयम्। उक्तं हि सुश्रुते सूत्रस्थाने एकविंशतितमेऽध्याये "स (वातः) शीताभ्रप्रवातेषु घर्मान्ते च विशेषतः। प्रत्यूषस्य पराह्णे तु जीर्णेऽन्ने च प्रकुप्यति।" तत् (पित्तं) उष्णैरुष्णकाले च मेघान्ते च विशेषतः। मध्याह्ने चार्द्धरात्रे च जीर्य्यत्यन्ने च कुप्यति।" स (श्लेष्मा) शीतैः शीतकाले च वसन्ते च विशेषतः। पूर्वाह्णे च प्रदोषे च भुक्तमात्रे प्रकुप्यति ॥ १६ ॥

वाताधिकेति। वाताधिका वातोल्वणा नाड़ीति मध्ये तर्जन्यनामिकयोर्मध्ये वहतीत्यर्थः। अग्रे अङ्गुष्ठमूलेति

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

आदौ च वहते पित्तं मध्ये श्लेष्मा तथैव च।
अन्ते प्रभञ्जनो ज्ञेयः सर्वशास्त्रविशारदैः॥१८॥
भूलता भुजगप्राया स्वच्छा स्वास्थ्यमयी शिरा।
सुखितस्य स्थिरा ज्ञेया तथा बलवती मता॥१९॥

पित्तला पित्तोल्वणा; अन्ते अनामिकायाः कफोल्वणा इत्यन्वयः। स्पष्टमन्यत्॥ १७॥

आदाविति। पित्तमादौ वहते मध्ये श्लेष्मा अन्ते प्रभञ्जनो ज्ञेय इति एतद्वचनममूलकं पित्तस्य मध्ये सर्वैर्लिखितत्वात् कफस्य मध्ये चासङ्गतत्वात् च सुस्थस्यानुभावाच्च। असाध्यतायामपि पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्माणमाविभ्रतीमित्याद्युक्तेश्च समूलत्वे दोषाविष्टपरमिति शङ्करसेनोक्तम्। अत्र क्वचित् कश्चिदेवं व्याचकार। यदा विकृतिविषमसमवेतवातप्रेरितौ पित्तश्लेष्माणौ स्वाश्रयपरित्यागिनौ भवतस्तदा स्वस्थानं परिहृत्य गतिं कुरुत इति। दोषाविष्टमिवोक्तम्। अत्र दोषशब्दो वायुमाहेति शङ्करसेनाभिप्रायः। आदौ तर्जनीनिवेशस्थले मध्ये कफोणिपीड़नमपेक्ष्य अर्थात् अनामिकानिवेशस्थले अन्ते उपविष्टा अर्थात् मध्यमानिवेशस्थले यथाक्रमम् पित्तकफवाता वहन्ति। शङ्करसेनेनोक्तम्। यथा "अन्ते प्रभञ्जनो ज्ञेयः सर्वशास्त्रविशारदैः" इति तदमूलं पित्तस्य सर्वत्रैव मध्यत्वेनाभिहितत्वात्, स्वस्थस्य तथा अनुभवाच्च। असाध्यतायां पूर्वं पित्तगतिरित्यस्य लिखितत्वाच्च समूलत्वेऽपि असाध्यतादोषाविशपरं पित्तकालपरं वा यदा यं धातुमाप्नोति इत्याद्युक्तेरिति केचित्॥ १८॥

सुस्थज्ञानमाह भूलतेत्यादि। प्रायेति अनयो र्गमनतुल्या स्वच्छा परितो जाड्यरहिता। स्वास्थ्यमयीति स्वास्थ्यव्यञ्जिका।

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

प्रातः स्निग्धमयी नाड़ी मध्याह्नेऽप्युष्णतान्विता।
सायाह्ने धावमाना च चिराद्रोगविवर्जिता ॥२०॥

पैत्त्याश्रितायाश्च क्रमेण वातादे र्गतिमाह।

वातात् वक्रगता नाड़ी चपला पित्तवाहिनी।
स्थिरा श्लेष्मवती ज्ञेया मिश्रिते मिश्रिता भवेत्२१

भूलता किञ्चुलकः। भुजगः सर्पस्तयो र्गमनप्रायेति। भूलतेव मसृणवक्रगमना सर्पवत् परिपुष्टा इत्यर्थः। सुस्थितस्येति स्थिरा मन्दगमना, बलवती स्थौल्ये सति जाड्यरहिता ॥१९॥

प्रातरिति चिरादिति। अतीतानागतयोर्ग्रहणम्, एतत्तु वातादीनां व्याख्यानं स्थानविशेषस्य यदुक्तं एतत्तु सर्वसम्मतं गतिविशेषस्य सर्वसम्मतत्वात्। अतः शङ्करसेनेन व्याख्यातं स्थानविशेषस्य कृताप्यवक्ष्यमाणत्वादिति यथा चिरादिति अतीतानागतयोर्द्वयोरप्युक्तिः। अवान्तरभेदस्तु स्वल्पकालबहुकालव्यापकगतिभेदात्। एतच्च पथ्याश्रितानामेव ॥

चिराद्रोगविवर्जिता यस्य बहुदिनं रोगो नाभूत् वा अधिकदिनमध्ये रोगो न भविष्यति तस्य नाड़ी प्रातःकाले स्निग्धमयी, मध्याह्ने उष्णतान्विता उष्णतायुक्ता सायाह्ने अपराह्णे धावमाना चञ्चलेत्यर्थः ॥ २० ॥

वातादिति। वक्रेति वायोस्तिर्य्यग्गमनात् तिरोवहन्तीति, चपलेति वह्नेरूर्द्ध्वज्वलनात् ऊर्द्ध्वचञ्चला स्थिरेति जलस्य नीचगमनात् अनुल्बणा, मिश्रिते मिश्रचिह्ना भवति। तेन द्विदोषजे उभयचिह्ना, त्रिदोषजे सर्वलिङ्गेति। चपलतास्थिरतयोः समयभेदेनाविरोधः ॥ २१ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

सर्पजलौकादिगतिं वदन्ति विबुधाः प्रभञ्जनेन नाड़ीम् ।
पित्तेन काकलावकभेकादिगतिं विदुः सुधियः ।
राजहंसमयूराणां पारावतकपोतयोः ।
कुक्कुटस्य गतिं धत्ते धमनी कफसंवृता ॥ २२ ॥
मुहुः सर्पगतिं नाड़ीं मुहुर्भेकगतिं तथा ।
वातपित्तद्वयोद्भूतां तां वदन्ति मनीषिणः ॥२३॥
भुजगादिगतिं नाड़ीं राजहंसगतिं तथा ।
वातश्लेष्मसमुद्भूतां भाषन्ते तद्विदो जनाः ॥२४॥

सर्पजलौकादीति । आदिशब्दात् वातेन वृश्चिकगतिर्दोलायितगतिः, पित्तेन काकगतिः, प्लुतगतिः कुलिङ्गकलविङ्कादिगतिः, कफे राजहंसगजवरवराङ्गनादिगतिरित्यर्थः ॥

विबुधाः पण्डिताः प्रभञ्जनेन कुपितवातेन सर्पजलौकादिगतिं वदन्ति कथयन्ति । पित्तेन कुपितपित्तेन काकादिगतिं सुधियः पण्डिताः विदुः ज्ञातवन्तः । कफसंवृता कुपितकफयुक्ता धमनी नाड़ी राजहंसादीनां तथा पारावतकपोतयोः कुक्कुटस्य च गतिं धत्ते ॥ २२ ॥

मुहुरिति । सर्पगतिं चक्रगतिं भेकगतिं प्लुतगतिं, मुहुर्वारंवारम् एवम्भूतां तां नाड़ीं मनीषिणः पण्डिता वातपित्तोद्भवां वदन्ति कथयन्ति ॥ २३ ॥

भुजगादिगादीति । भुजगादिगतिः संस्थानं यस्यास्तां तथा राजहंसगतिं नाड़ीं तद्विदो जना नाड़ीज्ञपण्डिता वातश्लेष्मसमुद्भूतां भाषन्ते कथयन्ति ॥ २४ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मण्डूकादिगतिं नाड़ीं मयूरादिगतिं धराम्।
पित्तश्लेष्मसमुद्भूतां प्रवदन्ति विचक्षणाः॥ २५॥

अन्यच्च।

सूक्ष्मा शीता स्थिरा नाड़ी पित्तश्लेष्मसमुद्भवा।
कफवातोद्भवा नाड़ी सर्पहंसगतिर्भवेत्॥ २६॥
उरगादिलावकादिहंसादीनाञ्च बिभ्रती गमनम्।

आदिना वातादेरन्यकर्मणामुक्तानामपि ग्रहणम्, एवञ्च पौर्वापर्य्यव्यतिक्रमेणापि कृच्छ्रसाध्यादित्वम्।

विचक्षणाः पण्डिता मण्डूकादिगतिं पित्तश्लेष्मसमुद्भूतां धरां नाड़ीं प्रवदन्ति कथयन्ति। आदिशब्देन वातस्य पित्तस्य कफस्य च पूर्वोक्तानां गतीनां अन्या वृश्चिकादीनां गतिर्ग्राह्या। पौर्वापर्य्यव्यतिक्रमेणेति "आदौ च वहते वातो मध्ये पित्तं तथैव च। अन्ते च वहते श्लेष्मा नाड़िकात्रयलक्षणम्" इति लक्षणेन यदा नाड़ी वहते तदा सुखसाध्यत्वं ज्ञेयं तद्व्यतिक्रमेण कृच्छ्रसाध्यत्वमसाध्यत्वञ्च ज्ञेयमित्यर्थः॥ २५॥

सूक्ष्मेति। अणुतरसूक्ष्मता न तु पित्तधर्मः। तथाप्यत्र विकृतिविषमसमवायावस्थत्वात्। कस्यचित् संयोगादिविशेषस्य विचित्रं कार्य्यं भवति, यथा हरिद्राचूर्णयोर्लौहित्यमिति, अथवा पित्तश्लेष्मणो र्द्रवत्वात् सूक्ष्मत्वं, अथवा सूक्ष्मत्वञ्चात्र पित्तश्लेष्मणोः संयोगः स्वभावादिति गुरवः। सूक्ष्मत्वेऽपि चाञ्चल्योपलब्ध इति। कृशतापि कफधर्मः, शीतताम्थिरत्वे कफस्य कार्य्ये किन्त्वान्तरीयकचाञ्चल्यम् अत्र सूक्ष्मता च पित्तधर्मः॥ २६॥

उरगादीति। उरगः सर्पः, आदिशब्देन जलौकावृश्चिकयो-

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

**वातादीनाञ्च समं धमनी सम्बन्धमाधत्ते॥ २७॥**
**लावतित्तिरिवार्त्तीकगमनं सन्निपाततः।**
**कदाचिन्मन्दगा नाड़ी कदाचिच्छीघ्रगा भवेत्।**
**त्रिदोषप्रभवे रोगे विज्ञेया सा भिषग्वरैः॥२८॥**

सन्निपातासाध्यलक्षणमाह।

**मन्दं मन्दं शिथिलशिथिलं व्याकुलं व्याकुलं वा,**

ग्रहणम् एतेन वातस्य, लावः पक्षिविशेषः, तत् प्रभृतीनां गते-र्ग्रहणं पित्तस्यैतत्। हंसादीनाम् आदिशब्दात् कपोतगज-वरवराङ्गनापारावतप्रभृतीनां ग्रहणं एतेन कफस्य। दोष-त्रयाणां वातादीनां समं सम्बन्धम् अन्यूनातिरिक्तं यदा धमनी आधत्ते इत्यतः सन्निपातकत्वं नाड्याः सूचितम्।

उरगादीनां लावकादीनां हंसादीनां गमनं गतिं बिभ्रती धारयन्ती धमनी नाड़ी वातादीनां वातपित्तकफानां समं तुल्यं नतु न्यूनातिरिक्तं सम्बन्धं क्रमम् आधत्ते, सन्निपाते धमनी आदौ उरगादिवत् मध्ये लावकादिवत् अन्ते हंसादि-वत् चलति तदा असाध्यत्वं न ज्ञेयम्। पित्तकफवातयेति आदौ पित्तगतिः, मध्ये वायुगतिः, अन्ते श्लेष्मगतिरिति विपरीतक्रमेण वहते तर्हि कृच्छ्रसाध्यत्वम् असाध्यत्वञ्च ज्ञेयम्॥ २७॥

लावेति। सन्निपाततः त्रिदोषजे नाड़ी लावादीनां गमनं धत्ते, सा नाड़ी कदाचिन्मन्दगा मृदुताभावेन गच्छति, कदा-चित् क्षणकालान्तरं शीघ्रगा द्रुतगामिनी भवेत्, त्रिदोष-प्रभवे सन्निपाते एवम्भूता नाड़ी भिषग्वरैः चिकित्सकप्रवरै-र्ज्ञेया॥ २८॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

स्थित्वा स्थित्वा वहति धमनी याति नाशञ्च सूक्ष्मा।
नित्यं स्थानात् स्खलति पुनरप्यङ्गुलीं संस्पृशेद्वा,
भावैरेवं बहुविधविधैः सन्निपातादसाध्या ॥२८॥

अन्यच्च।

अत्युच्चका स्थिरात्यन्ता या चेयं मांसवाहिनी।

मन्दमिति। मन्दं मन्दमनुत्कटं शिथिलशिथिलमिति स्खलद्गतिरूपम्। व्याकुलं व्याकुलमिति चस्खवदितस्ततो गमनम्। वाशब्दः समुच्चये, स्थित्वा स्थित्वेत्यावृत्त्या च तत्स्वरूपैव गतिः नाशमदर्शनं याति गच्छति, कदाचिन्नाड़ी स्पन्दापि न सम्भाव्यत इत्यर्थः। सूक्ष्मेति यदि लभ्यते तदा तथैव, नित्यं प्रायः स्थानादिति स्थानमङ्गुष्ठमूलं, तस्मात् स्खलति कदाचित् तत्र स्पन्दापि न संलभ्यते इत्यर्थः। पुनरपीति कियद्विलम्बे अङ्गुलीम् अङ्गुलीमूलं संस्पृशेत् अकस्मात् स्फुरेत्। एवं इत्येवंरूपै र्बहुविधविधै र्भावै र्धर्मैः सन्निपाते नाड़ी असाध्या ज्ञातव्या।

मन्दमिति। सन्निपातात् धमनी नाड़ी मन्दं मन्दं मुहुर्मुहुरप्रखरं शिथिलं शिथिलं यथा स्यात्तथा स्थित्वा स्थित्वा वहति चलति वा सूक्ष्मा सती नाशं याति गच्छति, स्थानात् स्वस्थानात् नित्यं सततं स्खलति चलतीत्यर्थः। पुनरपि अङ्गुलीं संस्पृशेत् अङ्गुल्या अनुभूयत इत्यर्थः। एवं बहुविधविधैर्नानाप्रकारकारणैर्भावै र्धर्मैः सन्निपातादसाध्या धमनी अननुभवेत्यर्थः॥ २८॥

अत्युच्चकेति। अत्युच्चका सहजतोऽप्युच्चतरा पृथगिवोन्नता। अत्यन्ताधिका स्थिरा कदाचित् प्रणिधानेनैव गम्यमानस्पन्दा च,

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

या च सूक्ष्मा च वक्रा च तामसाध्यां विनिर्दिशेत्
॥ ३० ॥

अन्यच्च।

महातापेऽपि शीतत्वं शीतत्वे तापिता शिरा।
नानाविधगति र्यस्य तस्य मृत्यु र्न संशयः ॥ ३१ ॥

अन्यच्च।

त्रिदोषे स्पन्दते नाड़ी मृत्युकालेऽपि निश्चला।
ज्ञेया सर्वविकारेषु वैद्यैः कुशलकर्मभिः ॥ ३२ ॥

मांसवाहिनी मांसाहारा इव गतिमती। लगुड़प्राया मांसेन समं वहतीति न युक्तं, तद्रूपपरिचायकप्रकारस्यानुक्तत्वात्, इयमिति वैशिष्ट्यबोधनाय। या च सूक्ष्मा च वक्रा चेति पृथगेव वाक्यान्तरम् इति।

मांसाहारे नाड़ीगतिः यादृशी भवति तादृशी नाड़ी अत्युच्चका स्वभावतोऽत्युच्चतरा या नाड़ी सूक्ष्मा वक्रा च तां नाड़ीम् असाध्यां विनिर्दिशेत् जानीयात् ॥ ३० ॥

महेति। आशयाकृष्टपित्तादिकृततापनिरासः। शीतत्वमित्यत्रापि महेति सम्बध्यते।

महातापे शरीरस्यातिशयोत्तापे शीतत्वं शरीरस्य शीतलत्वं शीतत्वे शरीरस्य अतिशयशीतलत्वे शिरा नाड़ी यदि तापिता उष्णा यस्य देहिनः शिरा नानाविधगति र्वातपित्तकफद्वन्द्वसन्निपातानां गति र्भवति तस्य मृत्युः न संशयः, निश्चयेन मृत्यु र्भवति ॥ ३१ ॥

निश्चला स्पन्दसामान्याभाववती। अतीसारादौ तु हस्तपदादिस्वेदादिना स्पन्दोपलम्भात्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

अन्यच्च ।

पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्माणमाविभ्रतीम्,
सन्तानभ्रमणं मुहुर्विदधतीं चक्राधिरूढ़ामिव ।
तीव्रत्वं दधतीं कलापिगतिकां सूक्ष्मत्वमातन्वतीम्
नो साध्यां धमनीं वदन्ति मुनयो नाड़ीगति-
ज्ञानिनः ॥ ३३ ॥

भूलताभुजगाकारा नाड़ी देहस्य सङ्क्रमात् ।

त्रिदोषे इति । त्रिदोषे सन्निपाते तथा मृत्युकालेऽपि नाड़ी निश्चला स्पन्दनाभाववत्यपि स्पन्दते स्फुरति ॥ ३२ ॥

पूर्वमिति । प्रथमं पूर्वं क्रमविपर्य्यये पित्तादिगतिमतीं मुहुरिति वारंवारं एवं क्रमेण सन्तानभ्रमणं सन्तानेन विस्तारेण एतेन स्थानत्रयं व्याप्य गतिं कुर्वतीं चक्रादिरूढ़ामिति चक्रोपरि भ्राम्यमाणामिव स्थानत्रयमिति शेषः । तीव्रत्वमिति तीव्रमतिशयवेगं, कलापिगतिकामिति कलापी मयूरस्तद्वद्गमनम् । यथा मयूरगतेरुत्तरोत्तरं कार्य्यं तथा लघुतामासादयन्तीम् एवम्भूतां नाड़ीं नो साध्यां नाड़ीज्ञा वदन्तीति शेषः । अतएव नोशब्दो निषेधवाचकः, यथा अमा नो ना प्रतिषेधवाचका इति ।

पूर्वमिति । नाड़ीगतिज्ञानिनो मुनयः पूर्वं प्रथमं पित्तगतिं तदनन्तरं प्रभञ्जनगतिं वायुगतिं ततः श्लेष्माणम् आविभ्रतीं मुहुश्चक्राधिरूढ़ामिव सन्तानभ्रमणं विदधतीं तीव्रत्वं दधतीं कलापिगतिकां सूक्ष्मत्वम् आतन्वतीं धमनीं नाड़ीं नो साध्यां असाध्यां वदन्ति ॥ ३३ ॥

असाध्योल्लेखात् सन्निपातादिदोषेषु रोगिष्वन्येषु चासाध्य-

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

विशीर्णेऽक्षीणतां याति मासान्ते मरणं ध्रुवम्
॥ ३४ ॥

क्षणाद् गच्छति वेगेन शान्ततां लभते क्षणात्।
सप्ताहान्मरणं तस्य यद्यङ्गं शोथवर्जितम् ॥ ३५ ॥

लक्षणमाह। भूलतेति। भूलता किञ्चुलुकस्तदाकारा नाड़ी वहतीति महीलतावत् कृशा तद्गतिवत् मसृणवक्र-गमना च, भुजगाकारेति तद्वत्परिपुष्टा तद्गतिवत् बलवद् वक्रगमना च वक्रत्ववैशिष्ट्येन सुस्थदशातो भेदः। विशीर्णे इति देहस्य विशेषणं तेनातिकार्श्येऽपि देहे इत्यम् अनेन प्रकारेण कदाचित्, अक्षीणताम् अनतिकृशतां यदा गच्छति तदा मासान्ते मरणं भवेदित्यर्थः। देहस्य इति देहस्य सम्यक्क्रम-मपेक्ष्यते, तेन देहोऽपि यदा स्थूलः शोथादिरोगेण, कदाचित् कृशः स्यात् तदा द्वितीये मासि म्रियते इति।

यस्य नाड़ो भूलता भुजगाकारा महीलतावत् कृशा तद्वत् मसृणवक्रगमना तथा भुजगाकारा सर्पवत् परिपुष्टा तद्वद्-गमनशीला सती विशीर्णे देहे संक्रमात् अक्षीणतां याति तस्य मासान्ते मरणं ध्रुवम् ॥ ३४ ॥

क्षणादिति। वेगेनेति क्षणात् क्षणात् द्रुतं द्रुतं गच्छति न तु कदाचित् वेगकाले शान्ततामुपलभते। शान्ततास्त्येव क्षणान्तरम्। शोथतन्मात्रसत्त्वेऽपि न चिरमिति सप्ताहमध्ये इति भावः। एवं विशिष्टायां नाड्यां सप्ताहानन्तरं मरण-मिति।

क्षणादिति। यस्य नाड़ी क्षणात् क्षणकालं व्याप्य वेगेन गच्छति वहति, क्षणात् सत्वरं शान्ततां निश्चलतां लभते यदि

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

हिमवद्विशदा नाड़ी ज्वरदाहेन तापिनाम्।
त्रिदोषस्पर्शभजतां तदा मृत्युर्दिनत्रयात्॥ ३६॥
निरीक्ष्या दक्षिणे पादे तथा चैषा विशेषतः।
मुखे नाड़ी वहेन्नित्यं ततस्तु दिनतुर्य्यकम्॥३७॥
गतिं भ्रमरकस्येव वहेदेकदिनेन तु।
कन्दे न स्पन्दते नित्यं पुनर्लगति चाङ्गुलौ।

शरीरं शोथवर्जितं स्यात् तस्य सप्ताहात् सप्तदिनानन्तरं अष्टमेऽहनि मरणं भवेत्॥ ३५॥

यदा निरन्तरं ज्वरतापौ शैत्यञ्च नाड्याः। त्रिदोषेति सन्निपातलक्षणसत्त्वे एव भवति।

हिमवदिति। ज्वरदाहेन ज्वरस्य दाहेन तापिनां ज्वरसन्तापेन सन्तप्तदेहानां त्रिदोषस्पर्शभजतां सन्निपातजुषां हिमवद्विशदा तुषारवत् परुषा शैत्यत्वेन तद्वदनुभूता नाड़ी यदा भवति तदा दिनत्रयात् त्रिदिनानन्तरं चतुर्थेऽह्नि मृत्युर्भवति॥ ३६॥

दक्षिणे इति पुंसः; स्त्रियास्तु वाम एव, तथेति करस्थैव। विशेषतो विशिष्टज्ञानार्थं यदि चोभयनाड्यपि मुखे पुरोभागे नित्यं सदा वहति तदा दिनचतुष्टयं व्याप्य जीवति।

निरीक्ष्येति। दक्षिणे पादे पुरुषस्य दक्षिणे पादे स्त्रियास्तु वामपादे निरीक्ष्या परीक्षणीया या नाड़ी धमनी विशेषतो विशेषज्ञानार्थं तथा एषा च करस्थापि यदि मुखे तर्जनीनिवेशस्थाने नित्यं सदा वहेत् ततस्तु तदा दिनतुर्य्यकं व्याप्य नरो जीवति। पञ्चमदिने तस्य मृत्युर्भवति॥ ३७॥

भ्रमरस्य परिभ्रमणरूपं गमनमिव मुखे यदि नाड़ी

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मध्ये द्वादशयामानां मृत्युरेव न संशयः ॥ ३८ ॥
स्थित्वा नाड़ी मुखे यस्य विद्युद्योत इवेक्ष्यते ।
दिनैकं जीवितं तस्य द्वितीये म्रियते ध्रुवम् ॥३९॥
स्वस्थानविच्युता नाड़ी यदा वहति वा न वा ।
ज्वाला च हृदयेऽतीव तदा ज्वालावधिस्थितिः ॥४०

वहति, कियद्दूरं गत्वा पुनस्तत्रागत्य त्यक्तप्रदेशे यथा भ्रमरो भ्रमति तद्वदित्यर्थः। एवं सङ्गतिः। तद्दिने मृत्युरित्यर्थः। दृष्टान्तमाह प्रहरान्तरमिति। कन्देनेति कन्दं मूलं नाड़ीमुखे इति यावत्। तत्र कदाचित् स्पन्दत इति पाठे तत्रैव स्वल्पं स्पन्दत इत्यर्थः। नित्यमिति पाठे तत्र प्रदेशे नित्यं स्पन्दते इत्यर्थः। पुनर्लगति चाङ्गुलाविति अङ्गुलाविव कन्दे मूले पुनर्लगति एवं यदि नाड़ी वहति तदा द्वादशप्रहरमध्ये मृत्युरित्यर्थः।

गतिमिति। भ्रमरकस्य गतिं गमनं तद्वत् नाड़ी चेत् वहेत् तदा एकदिनेन मृत्युर्भवति। यदि नाड़ी कन्दे तर्जनीनिवेशस्थाने नित्यं प्रायेण स्पन्दते पुनरङ्गुली तर्जन्यां लगति तदा द्वादशयामानां मध्ये निश्चितं ध्रुवं मृत्युर्भवति ॥ ३८ ॥

स्थित्वेत्याहत्य स्थित्वा स्थित्वा विद्युत्स्फुरणमिव लक्ष्यते इति। द्वितीय इत्यष्टप्रहरादूर्द्ध्वमित्यर्थः।

स्थित्वेति। यस्य नाड़ी स्थित्वा स्थित्वा मुखे अङ्गुष्ठमूले तर्जनीनिवेशस्थाने विद्युद्योत इव चपलायाः स्फुरणमिव ईक्ष्यते अनुभूयते तस्य जीवितं जीवनं दिनैकं एकदिनं व्याप्य तिष्ठति। स ध्रुवं निश्चितं द्वितीये दिवसे म्रियते ॥३९॥

स्वस्थानं स्वस्य स्थानं एतेन अङ्गुष्ठमूलमिति तस्मात्

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

अङ्गुष्ठमूलतो बाह्ये द्व्यङ्गुले यदि नाड़िका।
प्रहरार्द्धात् बहिर्मृत्युं जानीयाच्च विचक्षणः ॥४१॥
द्व्यङ्गुलात् बाह्यतो नाड़ी मध्ये रेखा वहिर्यदि।
सार्द्धप्रहरकात् मृत्युर्जायते नात्र संशयः ॥ ४२ ॥

विच्युता सती यदि नाड़ी वहति न वा वहति हृदये यदि ज्वाला विद्यते तदा ज्वालावधि ज्वालापर्य्यन्तं स्थितिस्तदवधिजीवनं ज्ञातव्यमिति।

स्वस्थानमिति। यस्य नाड़ी स्वस्थानविच्युता अङ्गुष्ठमूलात् विच्युता स्खलिता वहति न वा वहति, हृदये वक्षःस्थले अतीव ज्वाला चेत् तदा तस्य ज्वालावधि ज्वालापर्य्यन्तं स्थितिः जीवनस्य सीमेत्यर्थः ॥ ४० ॥

अङ्गुष्ठमूलाद्वहिरङ्गुलिद्वये मध्यमानामिकाया इत्यर्थः। तदा प्रहरार्द्धाद्वहिर्मृत्युरित्यर्थः।

अङ्गुष्ठमूलत इति। अङ्गुष्ठमूलतः द्व्यङ्गुलिमूलात् बाह्ये निम्ने द्व्यङ्गुले मध्यमानामिकाया न तु तर्जनीनिवेशस्थाने यदि नाड़िका वहति तदा विचक्षणः पण्डितः प्रहरार्द्धात् वहिः प्रहरानन्तरं मृत्युं जानीयात् ॥ ४१ ॥

द्व्यङ्गुलादिति। द्व्यङ्गुलाद्बाह्यत इति तर्जनीमध्यमयोर्बहिरित्यतोऽनामिकाया मध्ये इति यावत्। रेखाशब्देनात्र नाड़ी ज्ञेया, रेफस्य लकारश्रुतित्वेन लेखा इत्यर्थः। "श्रेणी लेखास्तु राजय" इत्यमरः। अङ्गुष्ठमूलादारभ्य अनामिकान्ता नाड़ी श्रेणीति शेषः। अनामिकाया मध्ये स्थिता सत नाड़ी रेखा वहिस्तदेति न युज्यते मध्यस्थितत्वेन रेखावहिः स्थितेन च विरोधात् तस्मात् मध्यस्थिते नाड़ी यदा श्रेणी वहिस्तदैवेति भावः। अतोऽङ्गुलित्रयानन्तरं सूचितम्। एव-

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मध्ये रेखा समा नाड़ी यदा तिष्ठति निश्चला ।
षड्भिश्च प्रहरैस्तस्य ज्ञेयो मृत्यु र्विचक्षणैः ॥४३॥
पादाङ्गुलगता नाड़ी चञ्चला यदि तिष्ठति ।
त्रिभिस्तु दिवसैस्तस्य मृत्यु रेव न संशयः ॥ ४४ ॥
पादाङ्गुलगता नाड़ी कोष्णा वेगवती भवेत् ।
चतुर्भिर्दिवसैस्तस्य मृत्यु रेव न संशयः ॥ ४५ ॥
पादाङ्गुलगता नाड़ी मन्दमन्दा यदा भवेत् ।
पञ्चभिर्दिवसैस्तस्य मृत्युर्भवति नान्यथा ॥ ४६ ॥

भूता सती यदि नाड़ी वहति तदा सार्द्धप्रहरानन्तरं मृत्यु-रित्यर्थः ।

द्व्यङ्गुलादिति । द्व्यङ्गुलात् वाह्यतस्तर्जनीमध्यमयो-र्वाह्ये अनामिकाया मध्ये नाड़ी यदि वहति तदा सार्द्धप्रहर-कात् सार्द्धप्रहरानन्तरं मृत्युर्भवति ॥ ४२ ॥

मध्ये मध्यमा निवेशस्थाने रेखा समेति रेखा नाड़ी समा समानावयवा ऊर्द्ध्वाधोऽनतिक्रम्य तत्रैव यदि निश्चला सती तिष्ठति, निश्चला स्पन्दाभाववती एवं प्रकारेण षड्भिः प्रहरैः षट्प्रहरानन्तरं मृत्युरित्यर्थः ॥ ४३ ॥

पादाङ्गुलगतेति । पादाङ्गुलं पादयुक्ताङ्गुलं, तर्जनीमभि-व्याप्य मध्यमायाः पदमेकं तत्र यदि नाड़ी चञ्चला सती वहति तदा त्रिदिनात् वह्निर्म्रियत इत्यर्थः ॥ ४४ ॥

पादाङ्गुलगतेति । पादाङ्गुलदेशे नाड़ी यदि कोष्णा ईषदुष्णा वेगवती भवेत् तदा चतुर्भि र्दिवसै र्दिनचतुष्टया-नन्तरं मृत्युरित्यर्थः ॥ ४५ ॥

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

एवं संख्यादिभेदेन नाड़ी ज्ञेया विचक्षणैः।
स्वर्गेऽपि दुर्लभा विद्या गोपनीया प्रयत्नतः ॥४७॥
भारप्रवाहमूर्च्छाभयशोकप्रमुखकारणान्नाड़ी।
सम्मूर्च्छितापि गाढ़ं पुनरपि सा जीवितं धत्ते॥४८

पादाङ्गुलगतेति। प्रागुक्तदेशे यदि नाड़ी मन्दमन्दा भवति तदा पञ्चभिर्दिवसैः पञ्चदिनानन्तरं मृत्युरित्यर्थः॥४६॥

एवमिति। एवं संख्यादिभेदेन पूर्वोक्तसंख्यानुसारेण विचक्षणैः पण्डितैः नाड़ी ज्ञेया परीक्षणीया, विद्या नाड़ीपरीक्षाविद्या स्वर्गेऽपि दुर्लभा दुर्विज्ञेया प्रयत्नतः गोपनीया॥ ४७॥

भार इति। चिरतरबहुलभारोद्वहनेन वा, प्रवाहेति धारावाहिकरुधिरदर्शनजन्ये या मूर्च्छा तया वा विषवेगेन वेति, भयेति व्याघ्रादिभयेन वा, शोकेति पुत्रदारधनादिविरहेण वा संमूर्च्छितापि अतिनिस्पन्दापि गाढ़ं सुतरां काश्यादियोगेऽपीत्यर्थः, पुनरपि साध्यतां यातीत्यर्थः। भावेति पाठे अभिमतकामिन्या अलाभतः। भावानां रत्यादीनां प्रवाहः भावप्रवाह इति न युक्तं, भयशोकयोः पृथग्विधानात् शोके विनष्टो भावशब्द इति। प्रमुखेति अन्यदपि हेत्वन्तरं ज्ञेयं, तदप्यत्र श्रमपतनादि ग्राह्यम्।

भार इति। भारो गुरुत्वं प्रवाहो धारावाहिकरुधिरं तेन मूर्च्छा, भयं व्याघ्रादिदर्शनजन्यत्रासः, शोकः पुत्रस्त्रीधनादिविरहेण दुःखं एते प्रमुखा आदयो यस्य तत् कारणं तस्मात् नाड़ी गाढ़म् अतिमात्रं संमूर्च्छितापि निस्पन्दापि सा नाड़ी पुनरपि जीवितं प्राणान् धत्ते॥ ४८॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पतितः सम्भितो भेदी नष्टशुक्रश्च यो भवेत् ।
शाम्यते विस्मयस्तस्य न किञ्चित् मृत्युकारणम् ॥४८
तथा भूताभिषङ्गे च त्रिदोषवदुपस्थिता ॥ ५० ॥
समाङ्गा वहते नाड़ी तथा च न क्रमं गता ।
अपमृत्यु र्न रोगाङ्गा नाड़ी तत्सन्निपातवत् ॥५१॥

पतित इति । पतित उच्चात् पतितः, सम्भितः इति अस्थ्यादिभङ्गेन संहितः सङ्गत इति, भेदी अतिसारवान्, नष्टशुक्र इति यत्नादिना अतिरमणेन वा शुक्रक्षयवान्, विस्मयोऽसाध्यत्वानुमानं, शाम्यते नावतरति ।

पतितादिकारणेन यस्य नाड़ी संमूर्च्छिता निस्पन्दा भवति तस्य मृत्युकारणं न स्यादित्यर्थः ॥ ४८ ॥

तथेति । अभिषङ्गोऽभिहननं भूतानामभिषङ्ग इत्यर्थः । भूताभिषङ्गे च देवदुष्टादौ आदिशब्दात् डाकिनीपूतनादीनि च ज्ञेयानि । नाड़ीसन्निपातशालिनी तद्वदुपस्थिता आपातत एव भवति न तु तद्वत् फलप्रदेति अत्र भेदमाह यद्यकस्मादिति चिन्तादियोगात् एवं नाड़ी भवति तथापि अपमृत्यु र्मृत्युरहिता ।

भूताभिषङ्गे यस्य नाड़ी त्रिदोषवत् सन्निपातवत् उपस्थिता तद्वद्गमनशीलेत्यर्थः । तद्वत् फलप्रदा न, तस्य मृत्युभयं नास्ति ॥ ५० ॥

समाङ्गेति । अङ्गेन समा समाङ्गा एतेन अङ्गे श्लिष्टा सती वहतीत्यर्थः । तथा चेति न क्रमं गता व्यतिक्रमं गतेत्यर्थः । वातादीनां गमनक्रमरहिता कदाचित् कुत्र गच्छति, एवम्भूतापि नाड़ी यस्य भवति तस्यापि मृत्यु र्नावतरति अपमृत्यु रिति ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

स्वस्थानहीने शोके च हिमाक्रान्ते च निर्गदाः।
भवन्ति निश्चला नाड्यो न किञ्चित्तत्र दूषणम् ५२
स्तोकवातकफं दुष्टं पित्तं वहति दारुणम्।
पित्तस्थानं विजानीयाद् भेषजं तस्य कारयेत् ॥५३
स्वस्थानच्यवनं यावद् धमन्या नोपजायते।
तत्स्थचिह्नस्य सत्त्वेऽपि नासाध्यमिति हि स्थितिः
॥ ५४ ॥

रिति। अपगतो मृत्युर्यस्या नाड्याः सा तथेति सन्निपातवदपि तर्जन्या न, न स्यात् ॥ ५१ ॥

स्वस्थानहीन इति। उच्चात् पतने अङ्गुष्ठमूलात् च्यवन इति नार्थः। यतो हन्ति च स्थानविच्युतेति वचनात्। निर्गदा इत्यपि च सङ्गतेः, निर्गता अपि निश्चला भवन्ति, तत्र किञ्चिद्दूषणत्वासाध्यानुमानं नोद्भावनीयं, हिमाक्रान्ते इति हिमादिसेवया अङ्गानामतिशीतत्वेऽपि।

अत्युच्चस्थानात् हीने पतने शोके धनबन्धुवियोगजन्यदुःखे, हिमाक्रान्ते हिमादिसेवया अङ्गानाम् अतिशीतलत्वे नाड्यो निर्गदा अपि रोगशून्या अपि निश्चलाः स्पन्दरहिता भवन्ति। तत्र स्वस्थानहीनादिकारणे किञ्चित् कथमपि दूषणं भयकारणं न स्यादित्यर्थः ॥ ५२ ॥

कफवातनाड़ी किञ्चित् वहति क्षीणाधिकत्वात् द्वाभ्यामपि विशेषादुल्बणं, पित्तं विषमवेगेन वहति तदा प्रतीकारार्थं भेषजं कुर्यात्, असाध्यता न स्यादिति यावत् ॥ ५३ ॥

स्वस्थानच्यवनमिति। स्वस्थानमङ्गुष्ठमूलं तस्मात् च्यवनं च्युतिं नाड्या यावत् नोत्पद्यते, तत्स्थस्य सत्त्वे तल्लक्षणस्य विद्यमानतायां सत्यां नासाध्यत्वं ज्ञेयमिति ॥ ५४ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

यदा यं धातुमाप्नोति तदा नाड़ी तथा गतिः ।
तथाहि सुखसाध्यत्वं नाड़ीज्ञानेन बुध्यते ॥
नाड़ी यथाकालगतिस्त्रयाणां प्रकोपशान्त्यादिभि-
र्देव भूयः ॥ ५५ ॥

पुष्टिस्तैलगुड़ाहारे मांसे च लगुड़ाकृतिः ।
क्षीरे च स्तिमितावेगा मधुरे भेकवद् गतिः ॥५६॥
रम्भागुड़वटाहारे रूक्षशुष्कादिभोजने ।

यदेति । यदा यस्मिन् समये यं धातुं रसादिकं समं न दुष्टं प्राप्नोति, तदा वातादयः स्वहेतुभूतोपचिताः सन्तः तथा गतिं कुर्वन्ति अतएव नाड़ी तथागतिर्भवतीत्यर्थः । तथा कालगतिस्तथाकाले गतिस्तेन यस्य दोषस्य प्रकोपको यः कालस्तस्मिन् काले, तस्य तादृशी गति र्यस्य दोषस्य यः शान्तिकालस्तस्मिन् काले तस्य शान्ति भूयोभूय इत्यर्थः ॥ ५५ ॥

पुष्टिरिति । पुष्टिः स्थौल्यं तैलाद्याहारे नाड्याः पुष्टिरित्यर्थः । एतत्तु आहारापक्वशेषस्वरूपं नतु पक्वस्यापक्वस्य सम्बन्धात्, कदाचिदन्यदपि ज्ञेयम् । तैलं इत्युपलक्षणं स्नेहसात्रशब्दः । एतेषां भक्षणादित्यर्थः । पूर्वोक्तत्वात् गुड़ाहार इति गुड़शब्दोऽत्र बोध्यः किञ्चित् जाड्यत्वात् तैलात् भेदः । मांसाहारे लगुड़ाकृतिरिति उच्छूनतया दण्डायमानत्वं, क्षीरे क्षीराहारे, स्तिमिता वेगेति स्तिमितं मन्दं मन्दं वेगः प्रवाहस्तेन मन्दा गतिरित्यर्थः । मधुरे शर्करादौ द्रवे चाद्रवे च भेकवत् प्लवगतिः । ननु प्लवगतिस्तु पित्तप्रकोपात् भवति, मधुरस्तु पित्तोपशमकरस्तदा कथमेवमुक्तमन्यत्र तु यदुक्तं तदप्यसङ्गतम् ॥ ॥ ५६ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

वातपित्तार्त्तिरूपेण नाड़ी वहति निष्क्रमम् ॥५७॥
मधुरे वर्हिगमना तिक्ते स्यात् भूलतागतिः।
अम्ले कोष्णा प्लवगतिः कटुके भृङ्गसन्निभा ॥५८॥
कषाये कठिना म्लाना लवणे सरला द्रुता।
एवं द्वित्रिचतुर्योगे नानाधर्मवती धरा ॥५९॥
स्वाद्वम्ललवणा वायुं कषायस्वादुतिक्तकाः।
जयन्ति पित्तं श्लेष्माणं कषायकटुतिक्तकाः ॥६०॥
कट्वम्ललवणाः पित्तं स्वाद्वम्ललवणाः कफम्।

रम्भागुड़योः प्रत्येकं मिलितयोरपि, वटाहारे वटकाहारे रम्भा च गुड़वटकश्चेत्यपरः, रूक्षमस्नेहं चूर्णविदलादि, शुष्कं स्निग्धमपि भर्जनरौद्रादिना कठिनं चिपीटकादि, वातेति वातपित्तगदे यद्रूपं, निष्क्रमसिति पौर्वापर्य्यविपर्य्ययेणापि ॥ ५७ ॥

वर्ही मयूरः, भूलता किञ्चुलुकः, प्लवगतिः भेकगमना। भृङ्गः कुलिङ्गविशेषः ॥ ५८ ॥

म्लाना जड़ा, एवञ्च निर्णीताजीर्णस्यैव वक्तव्यम्। तिक्ते तु कषायत्वम् एवं द्वित्रिचतूःरससंयोगाहारे नानाधर्मशालिनी ज्ञेयेत्यर्थः ॥ ५९ ॥

स्वाद्वम्ललवणा इति। एते वायुं जयन्ति अतो वायुस्थाने नाड़ी वहति, इति एवं सर्वत्र ज्ञेयम्। कफस्थाने इति अर्थात् कषायादयो जायन्ते पित्तनाशका अतस्तत्र न वहति एवं कषायकटुतिक्तकेषु बोध्यम् ॥ ६० ॥

कट्वम्ललवणा रसाः पित्तं कोपयन्ति कोपं प्रापयन्ति

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

कटुतिक्तकषायाश्च कोपयन्ति समीरणम् ॥६१॥
कटुतिक्तकषायाणां विपाकः प्रायशः कटुः।
अम्लोऽम्लं पच्यते स्वादु मधुरो लवणस्तथा ॥६२॥
मधुरो लवणोऽम्लश्च स्निग्धभावास्त्रयो रसाः।
वातमूत्रपुरीषाणां प्रायो मोक्षे सुखा मताः ॥६३॥
कटुतिक्तकषायाश्च रूक्षभावास्त्रयो रसाः।
दुःखानि मोक्षे दृश्यन्ते वात विण्मूत्ररेतसाम् ॥६४
मधुरं श्लेष्मलं प्रायो जीर्णात् शालियवादृते।

स्वाद्वम्ललवणा रसाः कफं तथा कटुतिक्तकषाया रसाः समीरणं वायुं कोपयन्ति ॥ ६१ ॥

कटुतिक्तकषायाणामिति कट्वादयो रसा विपाके प्रायशः कट्वः पच्यन्ते, अतः पित्तप्रकोपजं जयन्ति। नाड़ी तस्मात् पित्तस्थानेऽधिकं वहति। अम्लं अम्लपाकी अतः पित्तं कफञ्च द्रवत्वात् जनयति। मधुरो लवणश्च स्वादुः पच्यते अतो वायुं विना मधुरः कफं लवणं पित्तश्लेष्मणौ जयतः एवं सर्वत्र ज्ञेयम् ॥ ६२ ॥

मधुर इति। मधुरादित्रयः स्निग्धाः, अतः वातमूत्रपुरीषाणां मोक्षे त्यागविषये सुखाः सुखकरा मता ज्ञेया इत्यर्थः। मधुरो वातघ्नः पित्तघ्नश्च, एवं लवणश्च स्वादुः पाकः, अतो वातघ्न स्तस्मादेते स्निग्धा मलादीनां मोक्षे सुखदा इति गुरवः ॥ ६३ ॥

कटुतिक्तकषाया इति। एते कट्वादयस्त्रयो रसा रूक्षभावा इत्यस्मात् वातमूत्रपुरीषाणां मोक्षे त्यागे दुःखानि दृश्यन्ते ॥ ६४ ॥

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मुद्गात् गोधूमतः चौद्रात् सिताया जाङ्गलामिषात्
प्रायोऽम्लं पित्तजननं दाड़िमामलकादृते ॥ ६५ ॥
द्रवेऽतिकठिना नाड़ी कोमला कठिनाशने ।
द्रवद्रवस्य काठिन्ये कोमला कठिनापि च ॥६६॥
अम्लैश्च मधुराम्लैश्च नाड़ी शीता विशेषतः ।
चिपिटै र्भृष्टद्रव्यैश्च स्थिरा मन्दतरा भवेत् ।
कूष्माण्डै र्मूलकैश्चैव मन्दमन्दा च नाड़िका ॥६७॥

मधुरमिति। जीर्णात् पुरातनात् शालियवात् हैमन्तिकयवात् ऋते विना तथा मुद्गात् गोधूमतः गोधूमात् चौद्रात् मधुनः सितायाः शर्करायाः जाङ्गलामिषात् जङ्गलदेशजजन्तुमांसात् ऋते मधुरं मधुरद्रव्यं श्लेष्मलं श्लेष्मकरं ज्ञेयम्। दाडिमामलकात् ऋते प्रायोऽम्लं अम्लद्रव्यं पित्तजननं पित्तकरमिति ॥ ६५ ॥

द्रव इति। द्रवे द्रवसामान्ये नाडी कठिना कठिनस्पर्शा वातपूर्णचर्मपुटकवत्, कठिनाशने कठिनद्रव्यभोजने नाडी कोमला मृदुस्पर्शा भवतीत्यर्थः। द्रवद्रव्यस्य काठिन्ये रौद्रेण जलेन वा द्रवस्यापि काठिन्यमुत्पाद्य यदि भुङ्क्ते तदा नाडी कोमला कठिना च भवति, आदौ कोमला पश्चात् कठिना कर्दमान्तर्गतेष्टकादिखण्डवत्, आन्तरी कठिनोपलब्धिरिति गुरवः ॥ ६६ ॥

अम्लैश्चेति। अम्लैरम्लरसैः, एतेन स्निग्धाम्लरसैरिति। विशेषतो नाडी शीता शीतलस्पर्शा, चिपिटैर्भृष्टद्रव्यैश्चिपिट भृष्टद्रव्ययोः भक्षणे नाड़ी स्थिरा मन्दतया कूष्माण्डै र्मूलकैः कूष्माण्डमूलकयोर्भक्षणैर्मन्दतरा भवति ॥ ६७ ॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

शाकैश्च कदलैश्चैव रक्तपूर्णेव नाड़िका ।
मांसात् स्थिरवहा नाड़ी दुग्धे शीता बलीयसी ६८
गुड़ैः क्षीरैश्च पिष्टैश्च स्थिरा मन्दवहा भवेत् ।
गुड़रम्भामांसरूक्षशुष्कतीक्ष्णादिभोजनात् ।
वातपित्तादिरूपेण नाड़ी वहति निश्चला ॥ ६९ ॥
अम्लेऽपि हृदयसुस्थत्वे भवन्ति तापिताः शिराः ७०

अथ प्रकृतनाड़ीज्ञानमाह ।

प्रातः स्निग्धमयी नाड़ी मध्याह्नेऽप्युष्मतान्विता ।

शाकैरिति । शाकैः शाकसामान्यैः कदलैश्च नाडी रक्तपूर्णेव वहति, अतः कदुष्णा ज्ञेया यथा असृक्पूर्णा भवेत्, मांसात् मांसाहारात् स्थिरवहा दुग्धे दुग्धाहारे शीता शीतस्पर्शा, बलीयसी पुष्टा बलवत्तरा नाडी ज्ञेया ॥ ६८ ॥

गुडैरिति । गुडादिभि र्नाडी स्थिरा सती मन्दं मन्दं वहति, एषां गुडादीनां कफप्रकोपत्वात् गति र्मान्द्यं बोध्यम् गुडरम्भाभ्यां कृतवटकमित्यर्थः । मांसरूक्षशुष्कतीक्ष्णादीनां एकशो वा रूक्षशुष्कमांसेन च, तीक्ष्णं राजिकामरिचादि आदिशब्दात् भृष्टविदाहि द्रव्यमिति । तेषां भोजनात् वातपित्तार्त्तिरूपेण वातपित्तार्त्तिश्च वातपित्तजा पीडा सा किम्भूता "मुहुः सर्पगतिर्नाडी मुहु र्भेकगतिस्तथेति" प्रागुक्तम् । तेन रूपेण प्रकारेण नाडी निश्चला निस्पन्दा सती वहति ॥ ६९ ॥

अम्लेऽपीति । असुस्थत्वे हृदि सति अम्ले अम्लरसभोजने शिरा नाड्यस्तापिता उष्णा भवन्तीत्यर्थः ॥ ७० ॥

प्रातरिति । कफकालत्वात् प्रातर्दशदण्डपर्य्यन्तं नाड़ी

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

सायाह्ने धावमाना च रात्रौ वेगविवर्जिता ॥
प्रकृतिस्था च सा नाड़ी सदा ज्ञेया भिषग्वरैः ७१
अङ्गग्रहणे नाड़ीनां जायन्ते मन्थरा प्लवाः ।
प्लवः प्रबलतां याति ज्वरदाहाभिभूतये ॥ ७२ ॥
सान्निपातिकरूपेण भवन्ति सर्ववेदनाः ॥ ७३ ॥
ज्वरप्रकोपे धमनी सोष्णा वेगवती भवेत् ॥७४॥

स्निग्धा एवं मध्याह्ने उष्णतान्विता पित्तकालत्वात् पित्तोल्वण-सन्तापयुक्ता, एवं सायाह्ने वातकोपात् धावमाना रात्रौ वेगवर्जिता मन्दगमना तुषारपतनात् कफस्य प्राधान्यादिति, एवम्भूता नाड़ी प्रकृतिस्था स्वभावधर्मशालिनीत्यर्थः ॥ ७१ ॥

प्लवो भेकस्तद्वद्गमनं तेन चिरविलम्बेन अनुद्रिक्ततया बहुवचनादेवमेव वारद्वित्रयं सामान्याङ्गग्रहपिशुनमिदं भविष्य-ज्वरदाहपिशुनस्तु तद्विपरीतबहुलप्लव इत्याह प्लवः प्रबलता-मिति। उद्भटतया तथैव धारावाहिरूपतां याति नाड़ी-त्यर्थः ।

अङ्गग्रहणेति। अङ्गग्रहणे अङ्गवेदनया नाड़ीनां प्लवा द्वित्रिवारं मन्थरा भवन्ति नाड्या भेकादिवत् उत्प्लुत्य उत्प्लुत्य मन्दतया गमनमनुभूयते इत्यर्थः। ज्वरदाहाभिभूतये प्लवः नाड्या भेकादिवत् गमनं प्रबलतामाधिक्यं धारावाहिरूपं याति प्राप्नोति ७२ ॥

सान्निपातिकरूपेणेति। सान्निपातिकरूपवहनेन ज्वर-रूपपरिज्ञानेऽपि सर्ववेदनापरिज्ञानं सर्वेति नानावेदनाः पर्वणि पर्वणि भवन्तीत्यर्थः ॥ ७३ ॥

ज्वरप्रकोप इति। ज्वरप्रकोपे धमनी नाड़ी सोष्णा

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

ज्वरे च वक्रं धावन्ति तथा च मारुतप्लवे ।
रमणान्ते निशि प्रातस्तप्ता दीपशिखा यथा ॥७५॥
भृता च सरला दीर्घा शीघ्रा पित्तज्वरे भवेत् ।
शीघ्रमाहननं नाड्याः काठिन्याच्च चला तथा ।
मलाजीर्णेन नितरां स्पन्दनञ्च प्रकीर्त्तितम् ॥७६॥

उष्णेन सह वर्त्तमाना, वेगवती द्रुतगमना भवेदित्यर्थः ॥ ७४ ॥

ज्वरे चेति। वक्रमिति सर्पादिगमनं वक्रं यथा स्यात्तथा इति क्रियाविशेषणं धावन्ती शीघ्रगमना ज्वर इत्यधिकारात् उष्णानुभवात् वाताद्भेदः। वाते तु नाड्या अतिशयवक्रता आन्तरीयकोष्णता नास्त्येव। रमणानन्तरमपि रात्रावपि प्रातरपीति नार्थः। प्रातः स्निग्धमयीति विरोधात् ज्वरावच्छेदेनैव समस्तान्वय इत्येके। तस्य च वातादिजन्यत्वसामान्यं तावत् उक्तलिङ्गैरेवावगन्तव्यम्।

ज्वरे ज्वरवेगे नाड्यः वक्रं सर्पादिगमनवत् धावन्ति शीघ्रगमना भवन्ति इत्यर्थः। मारुतप्लवे वातोद्रेकेऽपि तथा पूर्ववत् धावन्ति। रमणान्ते निशि रात्रिकालीनरमणान्तरं, प्रातरिति रात्रिकालीनरमणान्ते प्रातःकाले नाड़ी दीपशिखा इव तप्ता भवति ॥ ७५ ॥

भृतेति। भृता परिपूर्णा सरला परितो ग्रन्थिजाड्यादिरहिता, दीर्घा अङ्गुलीत्रयस्थानव्यापिनी, शीघ्रा वेगवतीति पित्तसञ्चयदशायाम्। प्रकोपे तु भित्त्वेव वहिरूर्द्धं स्फुरतीव, अत्र हेतुः काठिन्यादिति। मलाजीर्णेन तत्रैव पित्तज्वरे दोषाजीर्णसम्बन्धेन नितरां सुतरां तथा चापल्येन च सहजया स्पन्दनं परिकीर्त्तितम्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

नाड़ी तन्तुसमा मन्दा शीतला श्लेष्मकोपतः ॥७७॥
चञ्चला तरला स्थूला कठिना वातपित्तजा।
ईषच्च दृश्यते तूष्णा मन्दा स्यात् श्लेष्मवातजा ॥७८
निरन्तरं खरं रूक्षं मन्दञ्च श्मातिवातला।
रूक्षवातभवे तस्य नाड़ी स्यात् पिण्डसन्निभा।
सूक्ष्मा शीता स्थिरा नाड़ी पित्तश्लेष्मसमुद्भवा ॥७९

भृतेति। पित्तज्वरे पित्तजन्यज्वरे नाड़ी भृता परिपूर्णा सरला परितो ग्रन्थिजाड्यादिरहिता, दीर्घा तर्जनीमध्यमानामिकाङ्गुलीत्रयस्थानव्यापिनी सती शीघ्रा पित्तसञ्चयदशायां वेगवती भवेत्, काठिन्यात् पित्तप्रकोपकाले इति शेषः। शीघ्रमाहननं नाड्याः द्रुतम् आहननं कृत्वा चला वहति ॥ ७६ ॥

तन्तुसमा अतिसूक्ष्मा मन्देति मरालादिवत् मन्थरागमना शीतलेति तप्तोदकसिक्तरज्जुवत् ज्वरसम्बन्धात्, कफचयप्रकोपरूपञ्च उक्तम् ॥ ७७ ॥

चञ्चलेति। चञ्चला कपिवदस्थिरा कलिङ्गभेकगमना चेति वातधर्मः। ईषच्च दृश्यते इति ईषदुष्णा नाड़ीत्यर्थः। वातधर्मोऽयं, मन्दा स्यादिति मन्दगमना हंसगमा चेति कफधर्मोऽयम् ॥ ७८ ॥

निरन्तरमिति। निरन्तरं धारावाहिरूपं मध्ये गत्यन्तररहितं, खरमिति मान्द्यव्यतिरेकेण धारावाहि, रूक्षमर्थादस्निग्धभावं कर्कशस्पर्शरूपञ्च मन्दश्लेष्मेति वाताधिक्यमपेक्ष्य श्लेष्मविनिर्मुक्तवातमाह रूक्षेति, पिण्डसन्निभेति वात्यादिना मध्ये वर्त्तुलीकृतप्राया चक्राकारेत्यर्थः, सा च अतिवक्रताति-

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

सौम्या सूक्ष्मा स्थिरा मन्दा नाड़ी सहजवातजा।
स्थूला च कठिना शीघ्रा स्पन्दते तीव्रमारुते॥८०॥
ज्वरप्रकोपे धमनी सोष्णा वेगयुता भवेत्।
कामात् क्रोधात् वेगरोधात् क्षीणा चिन्ताभय-
प्लुतात्॥८१॥
मध्ये करे वहेन्नाड़ी यदि सन्तापिता ध्रुवम्।
तदा नूनं मनुष्याणां रुधिरापूरिता मला:॥८२॥

स्थूलताभ्यां ज्ञेया। सूक्ष्मा कृशा स्थूलताविपर्य्ययेण कार्श्यस्यापि कफकार्य्यत्वात्, शीता शीतला अथ कदाचिदल्पशीता, कदुष्णा चेति केवलकफात् भेदः। तथा स्थिरा विश्रान्तवेगा, पित्तश्लेष्मजा नाड़ीत्यर्थः॥ ७९॥

सौम्येति। सौम्या अकठिना सूक्ष्मा कृशा स्थिरा चिरादेवोपलभ्यमानस्पन्दा, मन्दा उपलभ्यमानस्पन्दत्वेऽपि अनुद्भटस्पन्दा अप्रखरगमनेत्यर्थः। स्थूला अकृशा कठिना लौहादिवत्स्पर्शा, शीघ्रा अविलम्बेन स्फुरतीत्यर्थः॥ ८०॥

ज्वरप्रकोपे चेति स्पष्टम्। कामादिति कामक्रोधवेगरोधचिन्तादिषु नाडी क्षीणा अतिसूक्ष्मा भवति। ज्वरस्यापि विद्यमानत्वे चाञ्चल्यराहित्यं सूक्ष्मत्वात्॥ ८१॥

मध्यमे करे परीक्षार्थं निक्षिप्तमध्यमाङ्गुलिमूल एव यदि पित्तोद्रेकेण सन्तापिता तदा दुष्टरुधिरपूर्णता ज्ञेया। कफोणिस्थले नाड्या इति केचित् सर्वमेतत् ज्वरादन्यत्रापि बोद्धव्यम्। मला इत्यनेन उष्णवातसम्बन्धेन वातरक्तपरिचायकमिति वा। कफ दुष्टवातसम्बन्धेन वातरक्तपरिचायकं वा। प्रकरणन्तु

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

ज्वरस्य सहजागन्तुजभेदेन द्विधा,
सहजमुक्त्वाऽधुना आगन्तुजमाह।

भूतज्वरे सेक इवाति वेगा,
धावन्ति नाड्यो हि यथाब्धिगामाः ॥८३॥
ऐकाहिकेन क्वचन प्रदूरे,
क्षणान्तगामा विषमज्वरेण।
द्वितीयके वाथ तृतीयतुर्य्ये,
गच्छन्ति तप्ता भ्रमिवत् क्रमेण ॥ ८४ ॥

ज्वरहेतुकतया इति। त्रिदोषमात्रे उल्वणानुल्वणभेदादिदं सर्वमिति केचित्।

मध्ये इति। मध्ये करे परीक्षार्थं निक्षिप्तमध्यमाङ्गुलिमूले नाडी यदि ध्रुवं पित्तोद्रेकेण सन्तापिता उष्णस्पर्शा सती वहेत् तदा नूनं निश्चितं मनुष्याणां मला वातादिदोषा रुधिरेण दुष्टेन रक्तेन आपूरिता सम्यक् पूरिता ज्ञेयाः ॥ ८२ ॥

सेके जलसेके स्रोतःस्वतीव जलप्लुतेवेति यावत् तापस्तु स्यादेव। तेन तप्तजलसिक्तरज्जुवत् इत्यर्थः। यथा अब्धिगामा नद्यः पयःपूरे प्रविशन्तीत्यन्वयः ॥ ८३ ॥

प्रदूरे इत्यर्थादङ्गुष्ठमूलतः कियद्दूरे, क्षणावसानमात्रेण गमनशीला नाड्य इत्यनुषज्यते। द्वितीयकादौ च क्रमेण किञ्चित् किञ्चित् दूरं गच्छन्तीत्यर्थः। न चैव स्वस्थानच्यवनेनासाध्यत्वमिति अत आह तप्ता इति विशेषणेनान्वयः। भ्रमिवदिति पुनरेवमेवेति।

ऐकाहिकेनेति। ऐकाहिकेन विषमज्वरेण क्वचन क्वचित् प्रदूरे अङ्गुष्ठमूलात् किञ्चिद्दूरे नाड्यः गच्छन्ति, क्षणान्त-

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

क्रोधजे सङ्गलग्नाङ्गा ससङ्गा कामजज्वरे।
उष्णावेगधरा नाड़ी ज्वरकोपे प्रजायते ॥ ८५ ॥
उद्वेगक्रोधकालेषु भयचिन्ताभ्रमेषु च।
भवेत् क्षीणगतिर्नाड़ी ज्ञातव्या वैद्यसत्तमैः ॥८६॥
कामात् क्रोधात् वेगवती क्षीणा चिन्ताभय-
प्लुता।

गामाः क्षणकालान्तरं पुनः स्वस्थानं गच्छन्ति। द्वितीयके तृतीयके तुर्य्येऽथवा चातुर्थके वा ज्वरे नाड्यः तप्तास्तप्तस्पर्शाः सत्यो भ्रमिवत् क्रमेण कियद्दूरे गच्छन्ति ॥ ८४ ॥

सङ्गेति क्वचित् किञ्चित् आवर्जितदेहा, समेति नाड्यन्तरालिङ्गितप्राया, ज्वर इति ज्वररूपोष्णतावश्यकतया, सङ्गलग्नं नाड्यन्तरस्पृष्टमिव अङ्गं यस्याः सा नाडीति प्रकरणात्, समाङ्गेति नाड्यन्तरसम्बन्धेनैव वातादिक्रम इति, नतु उल्बणा। अजीर्णे जाड्यमात्रं न तु नाड्यन्तरसम्बन्धं उपैति असम्भवत्वात् इति। वेगधरा इति, वेगः शीघ्रगमनभेदः।

क्रोधज इति। क्रोधजे ज्वरे नाडी सङ्गलग्नाङ्गा अन्यनाड्या सह संलग्ना अन्यनाड्युपरि इव नाडी स्थिता इत्यर्थः। कामजज्वरे नाडी ससङ्गा अन्यनाड्या सह आलिङ्गिता इव, ज्वरकोपे पूर्वोक्तज्वरद्वयस्य प्रकोपे नाडी उष्णा उष्णस्पर्शा वेगधरा वेगवती च भवति द्रुतगमनेत्यर्थः ॥ ८५ ॥

श्रमशीघ्रगमनादिभेदेन उद्वेग उत्पद्यते। क्रोधः ख्यातः कामो रतिः भयं राक्षसादिदर्शनात् चिन्तायां दुःखादेर्भावनायां भ्रमे भ्रमादिषु ॥ ८६ ॥

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

ज्वरे च रमणे नाड़ी क्षीणाङ्गी मन्दगामिनी॥८७॥
ज्वरे कामार्त्तिरूपेण भवन्ति विकलाः शिराः।
उष्णत्वं विषमा वेगा ज्वरिणां दधिभोजनात्।
काञ्जिकया ज्वराक्रान्ते जायते मन्थरा गतिः॥८८॥
व्यायामे भ्रमणे चैव चिन्तायां धनशोकतः।
नानाप्रकारगमनं शिरा गच्छति विज्वरे ॥८९॥

कामादिति। कामात् रत्यावेशात्, क्रोधात् अमर्षात् वेगवती नाडीत्यर्थः। चिन्ताभयप्लुतात् चिन्तातिशययोगात् क्षीणा नाडीति शेषः। ज्वरे इति ज्वरे सत्यपि रमणे कृते क्षीणाङ्गी कृशा सती मन्दं मन्दं वहतीत्यर्थः न तु ज्वरे च रमणे च इति॥ ८७॥

ज्वरे कामार्त्तिरूपेणेति। कामार्त्तिः रत्यावेशपीडा तदवस्थासु दृष्टा प्रायशः नाड़ी विकला इतस्ततश्चञ्चला उष्णत्वमिति, सहजज्वरादधिकं, विषमा ज्वरोक्तादपि उत्कटेति ज्वरं विना दधिभोजनाच्चेत्यर्थः। ज्वरे अन्यरोगे च काञ्जिकभोजनात् मन्थरा गतिः द्रव्यस्वभावादिति।

ज्वरे कामार्त्तिरूपेण ज्वरकालीनस्त्रीसंसर्गेच्छया शिरा नाड्यः विकला इतस्ततश्चपलाः, ज्वरिणां दधिभोजनात् ज्वरे दधिभोजनात् उष्णत्वं नाड्या इति शेषः। विषमा वेगा ज्वरादधिकवेगा, काञ्जिकया ज्वराक्रान्ते मन्थरा गति र्नाड्या इति शेषः॥ ८८॥

चिन्तायां अध्ययनादिना। नानेति क्षणं क्षणं अन्यरूपतया। विज्वर इति ज्वरमुक्तमात्रे, प्रकृतशरीरेऽपि व्यायामादिना नाड़ीज्ञानभावस्य उक्तत्वात्। इति ज्वरज्ञानं॥८९॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

इदानीं प्राप्तावसरतया योगान्तर निरूपणे कर्त्तव्ये, प्रकट-रोगाणां ग्रन्थान्तरे निःसन्देहनिरूपणात् तेषां वातादि-जन्यत्वविशेषस्य प्रागुक्तलक्षणैरेवाधिगमनाच्च निगूढ़लिङ्गरोग-निरूपणमिवारभमाणो निखिलगदमूलत्वात् अजीर्णनिरूपण-माह।

**अजीर्णे तु भवेन्नाड़ी कठिना परितो जड़ा।**
**प्रसन्ना तु द्रुता शुद्धा त्वरिता च प्रवर्त्तते॥ ९०॥**

अत्र विशेषमाह।

**पक्वाजीर्णे पुष्टिहीना मन्दं मन्दं वहेत् शिरा।**
**असृक्पूर्णा भवेत् कोष्णा गुर्वी सामा गरीयसी ९१**

प्रसङ्गात् भोजनक्षुधयो र्ज्ञानमाह।

**सुखितस्य स्थिरा ज्ञेया चपला क्षुधितस्य च।**

अजीर्णे आमपक्वादिसामान्ये कठिना अकोमला परितः उभयपार्श्वतः। जड़ा अपृथग्भूतप्राया, वक्ष्यमाणत्वरितत्व-व्यतिरेकेण मन्दमन्दगमना च। प्रसन्ना तु अजीर्णाभाववती द्रुता अकठिना जलप्लुतेव च, शुद्धा जाड्यरहिता, त्वरिता शीघ्रस्पन्दा च॥ ९०॥

कोष्णेति मध्यकर एव प्रागुक्तं, गुर्वी कोष्णेति पूर्वेणा-न्वयः। उक्तञ्च "गुर्वी कोष्णा च रुधिरपूर्णा नाड़ी प्रजायते" इति। सामा चेत् गरीयसी, स्थूला गुरुतायुक्तत्वात् आमस्य, अकठिना कफोद्रेकात्, वाताजीर्णे तु कठिनेत्यनुभवः॥ ९१॥

सुखितस्येति। सुखितस्य भोजनादिना तृप्तस्य भोजना-पक्वरससम्बन्धात् स्थिरा मन्दगमना नाड़ीतिशेषः। स्थूलता

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मन्दाग्नेः क्षीणधातोश्च नाड़ी मन्दतरा भवेत् ९२

अन्यच्च।

मन्देऽग्नौ क्षीणतां याति नाड़ी हंसाकृतिस्तथा ९३
आमाशये पुष्टिविवर्द्धनेन,
भवन्ति नाड्यो भुजगाग्रवृत्ताः।
आहारमान्द्यात् उपवासतो वाऽ-
तथैव नाड्यो भुजगातिवृत्ताः॥ ९४॥

चेत्तत्र मन्तव्या अन्यत्र च "सुखितस्य स्थिरा ज्ञेया तथा बलवती मते"ति पाठे बलवती स्थूला, चपला अस्थिरा पित्तोल्वणतया कुलिङ्गलावकादिगमना च। मन्दाग्नेरिति मन्दतरा हंसगमना क्षीणा शीतला चेति। तथा च क्षीणधातौ च मन्दाग्नौ नाड़ी मन्दतरा भवेदिति। अस्यार्थः, अत्र किञ्चिज्जड़ता बोद्धव्या दीप्ताग्नौ लघुताविपर्य्ययात्॥ ९२॥

मन्द इति। हंसाकृतिः हंसगमनेत्यर्थः॥ ९३॥

भुजगाग्रवृत्ता इति। स्थौल्याभिवृद्धाः पश्चादपेक्षया भुजगस्य अग्रभुजे भुजगाग्रे वृत्तं वर्त्तनं यासाम्। अतिवृद्धा इति क्वापि। तथा बहुभोजिनोऽल्पाशनेन च ईषद्धि कराग्र एव सर्पफणाकारा भवन्ति. किञ्चित् वक्रा भूत्वा स्थित्वा वहन्तीत्यर्थः। भुजगप्रमाणा इत्यपि पठन्ति केचित्। अतथा अन्यथा तेन क्रमेण पुष्टाः क्रमेण क्षीणाश्चेत्यर्थः। अतिवृत्ताः वर्त्तुलास्तेन गतिस्तु मन्दैव। उपवासे तु शीघ्रक्षीणा च वक्रा च वाताधिक्यात्।

आमाशय इति। आमाशये प्रवाहिकायां पुष्टिविवर्द्धनेन पुष्टिकरद्रव्यभोजनेन नाड्यो भुजगाग्रवृत्ता भुजगस्य सर्पस्य

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

लघ्वी वहति दीप्ताग्नेस्तथा वेगवती स्मृता ॥९५॥
पादे च हंसगमना करे मण्डूकसंप्लवा ।
तस्याग्ने र्मन्दता देहे त्वथवा ग्रहणीगदः ॥ ९६ ॥

भेदेन शान्ता ग्रहणीगदेन,
निर्वीर्य्यरूपा त्वतिसारभेदे ।
विलम्बिकायां प्लवगा कदाचित्,
आमातिसारे पृथुला जड़ा च ॥ ९७ ॥

अग्रभाव इव वृत्तं वर्तुलाकारं यासां सर्पफणाकारवत् वर्त्तुला इत्यर्थः। आहारमान्द्यात् आहारस्य अल्पत्वात्, वा उपवासतः अनाहारात् नाड्यो भुजगातिवृत्ताः सर्पवत्गमनशीलास्तद्वद्वर्तुलाकाराश्च भवन्ति ॥ ९४ ॥

लघ्वी न पुष्टा नापि क्षीणा, किन्तु स्वच्छा उच्छूना च, तथा क्षुधावृद्धया वेगवती धावमाना, मन्दाग्निवैपरीत्येन च च अशीतला क्षीणा च ज्ञेया ॥ ९५ ॥

पादस्था करस्था च नाड़ीत्यर्थः ।

पाद इति। पादे यस्य पादस्थिता नाड़ी हंसगमना हंसवद्गमनशीला, करे हस्तस्थितनाड़ी मण्डूकसंप्लवा भेकवद्गमना भवति तस्य देहे शरीरे अग्ने र्मन्दता अग्निमान्द्यं अथवा ग्रहणीगदः ग्रहणीरोगः ज्ञेयः ॥ ९६ ॥

संग्रहग्रहण्यामिव यदि रेचनं महत् तदानीं शान्ता अनुल्वणा कदाचित् किञ्चिदेवोपलभ्यमानस्पन्दा। एवञ्च चिरातिसारिणो यदि भेदो रेचनं तदानीं तत्र कृच्छ्रतमा, अतिसारमात्रे कृच्छ्रतमत्वमतिरेचनात्। निर्वीर्य्यरूपा स्रस्ताङ्गवत् हस्तपादस्वेदादिना उपलभ्यमानस्पन्दत्वेऽपि अतिमृदु-

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

चीणञ्च वात-पित्ताभ्यां ग्रन्थिश्च श्लेषरक्तितः ।
मलानां सन्निपाताच्च शुक्र-दोषा इतीरिताः ॥ १६४ ॥
अथ स्त्री-रोग-नामानि प्रोच्यन्ते पूर्वशास्त्रतः ।
अष्टावार्त्तवदोषाः स्युर्वात-पित्तकफैस्त्रिधा ।
पूयाभं कुणपं ग्रन्थिः चीणं मलसमन्तथा ॥ १६५ ॥
तथा च रक्त-प्रदरं चतुर्विधमुदाहृतम् ।
वात-पित्त-कफैस्त्रेधा चतुर्थं सन्निपाततः ॥ १६६ ॥
विंशतिर्योनि-रोगाः स्युर्वातात् पित्तात् कफादपि ।
सन्निपाताच्च रक्ताच्च लोहितचयतस्तथा ॥ १६७ ॥
शुष्का च वामिनी चैव खण्डितान्तर्मुखी तथा ।
सूचीमुखी विप्लुता च जातघ्नी च परिप्लुता ॥ १६८ ॥
उपप्लुता प्राक्चरणा महायोनिरुदाहृता ।
कर्णिका चातिचरणा योनिरोगा इतीरिताः ॥ १६९ ॥
चतुर्विधं योनि-कन्दं वात-पित्त-कफैस्त्रिधा ।
चतुर्थं सन्निपातेन तथाष्टौ गर्भजा गदाः ॥ १७० ॥
उपविष्टक-गर्भः स्यात्तथा नागोदरः स्मृतः ।
मक्कल्लो मूढ-गर्भश्च विष्कम्भो मूढगर्भकः ।
जरायु-दोषो गर्भस्य पातश्चाष्टमकः स्मृतः ॥ १७१ ॥
पञ्चैव स्तन-रोगाः स्युर्वातात् पित्तात् कफादपि ।
सन्निपातात् चताच्चैव तथा स्तन्योद्भवा गदाः ॥ १७२ ॥
बालरोगेषु कथिताः स्त्री-दोषाश्च त्रयः स्मृताः ।
अदत्त-पुरुषोत्पन्नः सपत्नी-विहितस्तथा ॥ १७३ ॥
दैवाज्जातस्तृतीयस्तु तथा ये सूतिकागदाः ।
ज्वरादयश्चिकित्स्यास्ते यथादोषं यथाबलम् ॥ १७४ ॥
द्वाविंशतिर्बालरोगास्तेषु चीर-भवास्त्रयः ।
वातात् पित्तात्कफाच्चैव दन्तोद्भेदश्चतुर्थकः ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

दन्तघातो दन्तशब्दः कालदन्तोऽहिपूतनम्॥ १७५॥
मुख-पाको मुखस्रावो गुदपाकोपशीर्षके।
पार्श्वारुणस्तालुकण्ठो विच्छिन्नं परिगर्भिकः॥ १७६॥
दौर्बल्यं गात्रशोषश्च शय्यामूत्रं कुकूणकः।
रोदनञ्चाजगल्ली स्यादिति द्वाविंशतिः स्मृताः॥ १७७॥
तथा बालग्रहाः ख्याता द्वादशैव मुनीश्वरैः।
स्कन्दग्रहो विशाखः स्यात् स्वग्रहश्च पितृग्रहः॥ १७८॥
नैगमेयग्रहस्तद्वच्छकुनिः शीतपूतना।
मुख-मण्डितिका तद्वत् पूतना चान्ध-पूतना।
रेवती चैव संख्याता तथा स्याच्छुष्करेवती॥ १७९॥
तथाऽवरणभेदास्तु वात-रक्तादिकाश्च ये।
द्वि-चत्वारिंशदुक्तास्ते रोगेष्वेव मुनीश्वरैः॥ १८०॥
द्विषष्टिर्दोषभेदाः स्युः सन्निपातादिकाश्च ये।
तेऽपि रोगेषु गणिताः पृथक्प्रोक्ता न ते क्वचित्॥ १८१॥
हीन-मिथ्याऽतियोगानां भेदैः पञ्चदशोदिताः।
पञ्च कर्म-भवा रोगास्तेऽपि रोगेषु संश्रिताः॥ १८२॥
स्नेह-स्वेदौ तथा धूमो गण्डूषोऽञ्जन-तर्पणम्।
अष्टादशैव याः पीडास्ताश्च रोगेषु लक्षिताः॥ १८३॥
शीतोपद्रव एकः स्यादेकश्चोष्णोद्भवो मतः।
शल्योपद्रव एकश्च चौरश्चैकः स्मृतस्तथा॥ १८४॥
स्थावरं जङ्गमञ्चैव कृत्रिमञ्च त्रिधा विषम्।
तेषाञ्च कालकूटाद्यैर्नवधा स्थावरं विषम्।
जङ्गमं बहुधा प्रोक्तं तत्र लूता भुजङ्गमाः॥ १८५॥
वृश्चिका मूषिकाः कीटाः प्रत्येकं ते चतुर्विधाः।
दंष्ट्राविषं नखविषं बाल-शृङ्गास्थिभिस्तथा॥ १८६॥
मूत्रात् पूरीषाच्छुक्राच्च दृष्टेर्निःश्वासतस्तथा।

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

लालायाः स्मृतस्तद्वत् तथा शृङ्गिविषं मतम् ॥ १८७ ॥
कृत्रिमं द्विविधं प्रोक्तं गरदूषीविभेदतः।
सप्त धातुविषं ज्ञेयं तथा सप्तोपधातुजम् ॥ १८८ ॥
तथैवोपविषेभ्यश्च जातं सप्तविधं मतम्।
दुष्ट-नीर विषञ्चैकं तथैकं दिग्धजं विषम् ॥ १८९ ॥
कपि-कच्छु-भवा कण्डूर्दुष्ट-नीर-भवा तथा।
तथा शूरण-कण्डूश्च शोथो भल्लातजस्तथा।
मदश्चतुर्विधश्चान्यः पूग-भङ्गाह्वकोद्रवैः ॥ १९० ॥
चतुर्विधोऽन्यो द्रव्याणां फल-त्वङ्मूलपत्रजम्।
इति प्रसिद्धा गणिता ये किलोपद्रवा भुवि।
असंख्याश्चापरे धातु-मूल-जीवादिसम्भवाः ॥ १९१ ॥

समाप्तोऽयं पूर्वखण्डः।

—:॰:—

## मध्य-खण्डः।

### अथ प्रथमोऽध्यायः।

अथातः स्वरसः कल्कः क्वाथः हिमफाण्टकौ।
ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम् ॥ १ ॥
[स्वरसकल्पना] अ हतात्तत्क्षणाकृष्टाद् द्रव्यात् क्षुणात्समुद्भवेत्।
वस्त्र-निष्पीड़ितो यः स्यात् स्वरसो रस उच्यते ॥ २ ॥
कुडवं चूर्णितं द्रव्यं क्षिप्तञ्च द्विगुणे जले।
अहोरात्रं स्थितं तस्माद्भवेद्वा रस उत्तमः ॥ ३ ॥
आदाय शुष्कद्रव्यं वा स्वरसानामसम्भवे।
जलेऽष्टगुणिते साध्यं पाद-शिष्टञ्च गृह्यते ॥ ४ ॥
स्वरसस्य गुरुत्वाच्च पलमर्द्धं प्रयोजयेत्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

निशोषितश्चाग्निसिद्धं पलमात्रं रसं पिबेत् ॥ ५ ॥
मधुश्वेता-गुडक्षारान् जीरकं लवणन्तथा ।
घृतं तैलञ्च चूर्णादीन् कोलमात्रान् रसे क्षिपेत् ॥ ६ ॥
अमृतायाः रसः क्षौद्रयुक्तः सर्व-प्रमेह-जित् ।
हरिद्रा-चूर्ण-युक्तो वा रसो धात्र्याः समाक्षिकः ॥ ७ ॥
वासक स्वरसः पेयो मधुना रक्तपित्तजित् ।
ज्वर-कास-क्षय-हरः कामलाश्लेष्म-पित्तहा ॥ ८ ॥
त्रिफलाया रसः क्षौद्रयुक्तो दार्वी-रसोऽथवा ।
निम्बस्य वा गुडूच्या वा पीतो जयति कामलाम् ॥ ९ ॥
पीतो मरिच-चूर्णेन तुलसी-पत्रजो रसः ।
द्रोण-पुष्पी रसो वापि निहन्ति विषमज्वरान् ॥ १० ॥
जम्ब्वाम्रामलकीनाञ्च पल्लवोत्थो रसो जयेत् ।
मध्वाज्य-क्षीर-संयुक्तो रक्तातीसारमुल्बणम् ॥ ११ ॥
स्थूलवर्च्चूलिकापत्ररसः पानाद्व्यपोहति ।
सर्वातिसारान् श्योनाक-कुटज-त्वग्रसोऽथवा ॥ १२ ॥
आर्द्रक-स्वरसः क्षौद्र-युक्तो वृषणवात-नुत् ।
श्वास-कासारुचीर्हन्ति प्रतिश्यायं व्यपोहति ॥ १३ ॥
वीज-पूर-रसः पानान्मधु-क्षार-युतो जयेत् ।
पार्श्व हृद्वस्ति-शूलानि कोष्ठ-वायुञ्च दारुणम् ॥ १४ ॥
शतावर्य्याश्च मधुना पित्तशूल-हरो रसः ।
निशा-चूर्णयुतः कन्या-रसः प्लीहाऽपचीहरः ॥ १५ ॥
अलम्बुषायाः स्वरसः पीतो द्वि-पल-मात्रया ।
अपची-गण्ड-मालानां कामलायाश्च नाशनः ॥ १६ ॥
रसो मुण्ड्याः सकोष्णो वा मरिचैरवधूलितः ।
जयेत्सप्तदिनाभ्यासात् सूर्य्यावर्त्तार्द्धभेदकौ ॥ १७ ॥
ब्राह्मी-कुष्माण्ड-षट्ग्रन्थाशङ्खिनी स्वरसाः पृथक् ।

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मधु-कुष्ठ-युताः पीताः सर्वोन्मादापहारिणः ॥ १८ ॥
कूष्माण्डकस्य स्वरसो गुडेन सह योजितः ।
दुष्टकोद्रव-सञ्जातमदं पानाद्व्यपोहति ॥ १९ ॥
खड्गादिच्छिन्नगात्रस्य तत्कालं पूरितो व्रणः ।
गाङ्गेरुकी-मूलरसैर्जायते गत-वेदनः ॥ २० ॥
[अथ पुटपाकः] पुट-पाकस्य कल्कस्य स्वरसो गृह्यते यतः ।
अतस्तु पुटपाकानां युक्तिरत्रोच्यते मया ॥ २१ ॥
पुट-पाकस्य मात्रेयं लेपस्याङ्गारवर्णता ।
लेपञ्च द्व्यङ्गुलं स्थूलं कुर्य्याद् द्व्यङ्गुष्ठ-मात्रकम् ।
काश्मरीवट-जम्ब्वादिपत्रैर्वेष्टनमुत्तमम् ॥ २२ ॥
पल-मात्र-रसो ग्राह्यः कर्षमात्रं मधु क्षिपेत् ।
कल्क-चूर्ण-द्रवाद्यास्तु देयाः स्वरसवद्बुधैः ।
तत्कालाकृष्ट-कुटज-त्वचं तण्डुलवारिणा ॥ २३ ॥
पिष्टाञ्चतुःपलमितां जम्बूपल्लववेष्टिताम् ।
सूत्रेण बद्धां गोधूम-पिष्टेन परिवेष्टिताम् ।
लिप्ताञ्च घन-पङ्केन गोमयैर्वह्निना दहेत् ॥ २४ ॥
अङ्गार-वर्णाञ्च मृदं दृष्ट्वा वह्नेः समुद्धरेत् ।
ततो रसं गृहीत्वा च शीतं क्षौद्रयुतं पिबेत् ।
जयेत्सर्वानतीसारान्दुस्तरान् सुचिरोत्थितान् ॥२५॥

कुटजपुटपाकः ।

कण्डितं तण्डुलपलं जलेऽष्टगुणिते क्षिपेत् ।
भावयित्वा जलं ग्राह्यं देयं सर्वत्र कर्मसु ॥२६॥ तण्डुलजलम् ।
अरलुत्वक्कृतश्चैव पुटपाकोऽग्निदीपनः ।
मधु-मोचरसाभ्याञ्च युक्तः सर्वातिसारनुत् ॥२७॥ अरलुपाकः ।
न्यग्रोधादेस्तु कल्केन पूरयेद्गौरतित्तिरम् ।
निरन्त्रमुदरं सम्यक्पुटपाकेन तत् पचेत् ।

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

तत्कल्कस्य रसः क्षौद्रयुक्तः सर्वातिसारनुत् ॥ २८ ॥

तित्तिरि पुटपाकः ।

पुटपाकेन विपचेत् सुपक्वं दाड़िमी-फलम् ।

तद्रसो मधुसंयुक्तः सर्वातीसारनाशनः ॥२९॥ दाड़िमीपुटपाकः ।

बीजपूराऽम्र-जम्बूनां पल्लवानि जटाः पृथक् ।

विपचेत् पुटपाकेन क्षौद्र-युक्तस्य तद्रसः ।

छर्दिं निवारयेद्घोरां सर्व-दोषसमुद्भवाम् ॥३०॥ पल्लवपुटपाकः ।

पिष्टानां वृष-पत्राणां पुटपाकरसो हिमः ।

मधु-युक्तो जयेद्रक्त-पित्त-कास-ज्वर-क्षयान् ॥३१॥ वासापुटपाकः ।

पचेत् क्षुद्रां सपञ्चाङ्गां पुटपाकेन तद्रसः ।

कासपहः पिप्पली-चूर्ण-संयुक्तः कास-श्वास-क्षुधाऽपहः ॥ ३२ ॥

कण्टकारीपुटपाकः ।

विभीतकफलं किञ्चिद्घृतेनाभ्यज्य लेपयेत् ।

गोधूम-पिष्टेनाङ्गारैर्विपचेत् पुटपाकवत् ॥ ३३ ॥

ततः पक्वं समुद्धृत्य त्वचं तस्य मुखे क्षिपेत् ।

कास-श्वास-प्रतिश्याय-स्वरभङ्गाञ्जयेत्ततः ॥ ३४ ॥

विभीतकपुटपाकः ।

चूर्णं किञ्चिद् घृताभ्यक्तं शुण्ठ्या एरण्डजैर्दलैः ।

वेष्टितं पुटपाकेन विपचेन्मन्दवह्निना ॥ ३५ ॥

तत उद्धृत्य तच्चूर्णं ग्राह्यं प्रातः सितासमम् ।

तेन यान्ति शमं पीड़ा आमातीसारसम्भवाः ॥ ३६ ॥

शुण्ठीपुटपाकः ।

शुण्ठी-कल्कं विनिक्षिप्य रसैरेरण्डमूलजैः ।

विपचेत् पुटपाकेन तद्रसः क्षौद्र-संयुतः ।

आमवात-समुद्भूतां पीड़ां जयति दुस्तराम् ॥३७॥ द्वितीयशुण्ठी ।

सौरणं कन्दमादाय पुटपाकेन पाचयेत् ।

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

सतैललवणस्तस्य रसश्चार्शोविकारनुत् ॥३८॥ सूरणपुटपाकः ।

शराव-सम्पुटे दग्धं शृङ्गं हरिणजं पिबेत् ।

गव्येन सर्पिषा युक्तं हृच्छूलं नाशयेद् ध्रुवम् ॥३९॥ शृङ्गपुटपाकः

इति मध्यखण्डे प्रथमोऽध्यायः ।

## अथ द्वितीयोऽध्यायः ।

### अथ क्काथ-कल्पना ।

पानीयं षोडश-गुणं क्षुसे द्रव्य-पले क्षिपेत् ।

मृत्पात्रे क्काथयेद् ग्राह्यमष्टमांशावशेषितम् ॥ १ ॥

तज्जलं पाययेद्धीमान् कोष्णं मृद्वग्निसाधितम् ।

शृतः क्काथः कषायश्च निर्य्यूहः स निगद्यते ॥ २ ॥

आहाररसपाके च सञ्जाते द्विपलोन्मितम् ।

वृद्धवैद्योपदेशेन पिबेत् क्काथं सुपाचितम् ॥ ३ ॥

क्काथे क्षिपेत्सितामंशैश्चतुर्थाष्टमषोडशैः ।

वातपित्तकफातङ्के विपरीतं मधु स्मृतम् ॥ ४ ॥

जीरकं गुग्गुलुं क्षारं लवणञ्च शिलाजतु ।

हिङ्गु त्रिकटुकञ्चैव क्काथे शाणोन्मितं क्षिपेत् ॥ ५ ॥

क्षीरं घृतं गुड़ं तैलं मूत्रञ्चान्यद्रवन्तथा ।

कल्कं चूर्णादिकं क्काथे निक्षिपेत् कर्षसम्मितम् ॥ ६ ॥

गुडूचीधान्यकाऽरिष्टपद्मकारक्तचन्दनैः ।

गुडूच्यादि-गणः क्काथः सर्वज्वरहरः स्मृतः ।

दीपनो दाहहृच्छासतृष्णाच्छर्द्यरुचीर्जयेत् ॥७॥ गुडूच्यादिक्काथः

गुडूचीपिप्पली-मूलनागरैः पाचनं स्मृतम् ।

दद्याद्वात-ज्वरे पूर्ण-लिङ्गे सप्तमवासरे ॥८॥

गुडूच्यादिपाचनम् वातज्वरे ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

शालिपर्णीबला द्राक्षा गुडूची सारिवा तथा।
तासां क्वाथं पिबेत् कोष्णं तीव्रवातज्वरच्छिदम् ॥९॥
शालिपर्ण्यादिक्वाथः।

काश्मरीसारिवाद्राक्षा-त्रायमाणामृताभवः।
कषायः सगुडः पीतो वातज्वरविनाशनः ॥ १० ॥
काश्मर्यादिक्वाथः।

कट्फलेन्द्रयवापाठातिक्तामुस्तैः शृतं जलम्।
पाचनं दशमेऽह्नि स्यात्तीव्रपित्तज्वरे नृणाम् ॥११॥
कट्फलादिपाचनं पित्तज्वरे।

पर्पटो वासकस्तिक्ता कैरातो धन्वयासकः।
प्रियङ्गुश्च कृतः क्वाथ एषां शर्करया युतः।
पिपासादाहपित्तास्रयुक्तं पित्तज्वरं जयेत् ॥१२॥ पर्पटादिक्वाथः।
द्राक्षाहरीतकी-मुस्त-कटुकीकृतमालकः।
पर्पटश्च कृतः क्वाथ एषां पित्तज्वरापहः।
तृष्णमूर्च्छा-दाह-पित्तास्रकशमनो भेदनः स्मृतः ॥ १३ ॥
एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः।
किं पुनर्यदि युज्येत चन्दनोशीरवालकैः ॥१४॥ द्राक्षादिक्वाथः।
वीजपुर-शिफा-पथ्यनागर-ग्रन्थिकैः शृतम्।
सक्षारं पाचनं श्लेष्मज्वरे द्वादशवासरे ॥ १५ ॥
वीजपूरादिपाचनं श्लेष्मज्वरे।

भूनिम्ब-निम्ब-पिप्पल्यः सटीशुण्ठी शतावरी।
गुडूची बृहती चेति क्वाथो हन्यात् कफज्वरम् ॥ १६ ॥
भूनिम्बादिक्वाथः।

पर्पटाब्दामृताविश्व-कैरातैः साधितं जलम्।
पञ्चभद्रमिदं ज्ञेयं वातपित्तज्वरापहम् ॥ १७ ॥ पञ्चभद्रम्।
पटोल-त्रिफला-तिक्ता-सटीवासाऽमृताभवः।

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

क्वाथो मधु-युतः पीतो हन्यात् कफकृतं ज्वरम् ॥ १८ ॥

पटोलादिक्वाथः ।

क्षुद्राशुण्ठीगुडूचीनां कषायः पौष्करस्य च ।
कफ-वाताधिके पेयो ज्वरे वापि त्रिदोषजे ।
कासश्वासारुचिकरे पार्श्वशूलविधायिनि ॥ १९ ॥

लघुक्षुद्रादिक्वाथः ।

आरग्वधकणामूलमुस्तातिक्ताभयाकृतः ।
क्वाथः शमयति क्षिप्रं ज्वरं वातकफोद्भवम् ।
आमशूलप्रशमनो भेदी दीपनपाचनः ॥२०॥ आरग्वधादिक्वाथः

अमृतारिष्ट-कटुका-मुस्तेन्द्रयव-नागरैः ।
पटोल-चन्दनाभ्याञ्च पिप्पली-चूर्ण-युक् शृतम् ॥ २१ ॥
अमृताष्टकमेतच्च पित्तश्लेष्मज्वरापहम् ।
छर्द्यरोचकहृल्लासदाहतृष्णाविनाशनम् ॥२२॥ अमृताष्टकम् ।

कण्टकारी-द्वयं शुण्ठीधान्यकं सुरदारु च ।
एभिः शृतं पाचनं स्यात् सर्व-ज्वरविनाशनम् ॥ २३ ॥

इति कण्टकारीपाचनं सर्वज्वरेषु ।

शालपर्णीपृश्निपर्णीवृहतीद्वयगोक्षुरैः ।
विल्वाग्निमन्थ-श्योनाक-काश्मरी-पाटला-युतैः ।
दशमूलमिति ख्यातं क्वथितं तज्जलं पिबेत् ॥ २४ ॥
पिप्पलीचूर्णसंयुक्तं वातश्लेष्महरं परम् ।
सन्निपातज्वरहरं सूतिका-दोष-नाशनम् ॥ २५ ॥
शोषशैत्यभ्रम-स्वेद-कास-श्वास-विकारनुत् ।
हृत्कण्ठग्रह-पार्श्वार्त्ति-तन्द्रा-मस्तकशूलहृत् ॥ २६ ॥

दशमूलं सन्निपातज्वरे ।

अभयामुस्तधान्याकरक्तचन्दनपद्मकैः ।
वासकेन्द्रयवोशीरगुडूचीकतमालकैः ॥ २७ ॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पाठानागरतिक्ताभिः पिप्पलीचूर्णयुक् शृतम्।
पिबेत् त्रिदोषज्वरजित् पिपासाकासदाहनुत् ॥ २८ ॥
प्रलापश्वासतन्द्राघ्नं दीपनं पाचनं परम्।
विण्मूत्रानिलविष्टम्भवमीशोषारुचिच्छिदम् ॥ २९ ॥

अभयादिः सन्निपातज्वरे।

पिप्पली पिप्पलीमूलच्चव्यचित्रकनागरैः।
वचासातिविषाजाजीपाठा-वत्सकरेणुकैः ॥ ३० ॥
किराततिक्तकं मूर्वा सर्षपा मरिचानि च।
कटुकं पुष्करभार्गी विडङ्गङ्कर्कटाह्वयम् ॥ ३१ ॥
अर्कमूलं बृहत्सिंही श्रेयसी सदुरालभा।
दीप्यकश्चाजमोदा च शुक्रनासादिहिङ्गुभिः ॥ ३२ ॥
एतानि समभागानि गणोऽष्टविंशको मतः।
कषायमुपभुञ्जीत वातश्लेष्मज्वरापहम् ॥ ३३ ॥
हन्ति वातं तथा शीतं स्वेदजं प्रबलं कफम्।
प्रलापश्चातिनिन्द्राञ्च रोमहर्षारुचिन्तथा ॥ ३४ ॥
महावातेऽपतन्त्रे च सर्वगात्रे च शून्यताम्।
अयं सर्वज्वरान् हन्ति सन्निपातांस्त्रयोदश ॥ ३५ ॥

पिप्पल्यादिः सन्निपाते।

किराततिक्तकीमुस्ताधान्येन्द्रयवनागरैः।
दशमूलमहादारुगजपिप्पलिकायुतैः ॥ ३६ ॥
कृतः कषायः पार्श्वार्त्तिसन्निपातज्वरं जयेत्।
कासश्वासवमीहिक्कातन्द्राहृद्ग्रहनाशनः ॥३७॥ अष्टादशाङ्गः।
कट्फलाम्बुदभार्गीभिर्धान्य-रोहिषपर्प्पटैः।
वचाहरीतकीशृङ्गीदेवदारुमहौषधैः।
क्वाथः कासं ज्वरं हन्ति श्वासश्लेष्मगलग्रहान् ॥ ३८ ॥

कट्फलादिक्वाथः।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

क्वाथो जीर्णज्वरान् हन्ति गुडूच्या पिप्पलीयुतः ।
तथा पर्प्पटजः क्वाथः पित्तज्वरहरः परः ॥ ३९ ॥
निदिग्धिकाऽमृताशुण्ठीकषायं पाययेद्भिषक् ।　कंटकारी
पिप्पली-चूर्णसंयुक्तं श्वासकासार्दितापहम् ।
पीनसारुचिवैस्वर्यशूलाजीर्णज्वरच्छिदम् ॥ ४० ॥

निदिग्धिकादिः जीर्णज्वरे ।

क्षुद्राधान्याकशुण्ठीभिर्गुडूचीमुस्तपद्मकैः ।
रक्तचन्दनभूनिम्बपटोलवृषपौष्करैः ॥ ४१ ॥
कटुकेन्द्रयवाऽरिष्टभार्गीपर्पटकैः समैः ।
क्वाथं प्रातर्निषेवेत सर्वशीतज्वरच्छिदम् ॥ ४२ ॥

वृहत्क्षुद्रादिः शीतज्वरे ।

मुस्ताक्षुद्रामृताशुण्ठीधात्रीक्वाथः समाक्षिकः ।
पिप्पलीचूर्णसंयुक्तो विषमज्वरनाशनः ॥४३॥ मुस्तादिः विषमज्वरे
पटोलत्रिफलानिम्बद्राक्षाशम्पाकवासवैः ।
क्वाथः सितामधुयुतो जयेदेकाहिकं ज्वरम् ॥ ४४ ॥

पटोलादिः एकाहिकज्वरे ।

गुडूचीधान्यमुस्ताभिश्चन्दनोशीरनागरैः ।
कृतं क्वाथं पिबेत् क्षौद्रसितायुक्तं ज्वरातुरः ।
तृतीयज्वरनाशाय तृष्णादाहनिवारणम् ॥ ४५ ॥

गुडूच्यादिः तृतीयज्वरे ।

देवदारुशिवावासाशालिपर्णीमहौषधैः ।
धात्रीयुक्तं शृतं शीतं दद्यान्मधुसितायुतम् ।
चातुर्थकज्वरे श्वासे कासे मन्दानले तथा ॥ ४६ ॥

देवदार्व्यादिः चातुर्थकज्वरे ।

गुडूचीधान्यकोशीरशुण्ठीबालकपर्पटैः ।
विल्वप्रतिविषापाठारक्तचन्दनवत्सकैः ॥ ४७ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

किरातमुस्तेन्द्रयवैः क्वथितं शिशिरं पिबेत्।
सक्षौद्रं रक्तपित्तघ्नं ज्वरातीसारनाशनम्॥ ४८॥
ह्रद्गुडूच्यादिर्ज्वरातीसारे।

नागरं कुटजो मुस्तममृताऽतिविषा तथा।
एभिः कृतं पिबेत् क्वाथं ज्वरातीसारनाशनम्॥ ४९॥
नागरादिः ज्वरातीसारे।

धान्यबालकविल्वाब्दनागरैः साधितं जलम्।
आमशूलहरं ग्राहि दीपनं पाचनं परम्॥५०॥ धान्यपञ्चकम्।
धान्यनागरजः क्वाथः पाचनो दीपनस्तथा।
ऐरण्डमूलयुक्तश्च जयेदामानिलव्यथाम्॥५१॥ धान्यनागरम्।
वत्सकातिविषा-विल्वमुस्तबालकजः शृतः।
अतीसारं जयेत्सामं चिरजं रक्तशूलजित्॥ ५२॥ वत्सकादिः।
कुटजातिविषापाठाधातकीलोध्रमुस्तकैः।
ह्रीवेरदाड़िमयुतैः कृतः क्वाथः समाक्षिकः॥ ५३॥
पेयो मोचरसेनैव कुटजाष्टकसंज्ञकः।
अतीसारान् जयेद्दाहरक्तशूलामदुस्तरान्॥५४॥ कुटजाष्टकम्।
ह्रीवेरधातकीलोध्रपाठालज्जालुवत्सकैः।
धान्यकातिविषामुस्तागुड़ूचीविल्वनागरैः॥ ५५॥
कृतः कषायः शमयेदतीसारं चिरोत्थितम्।
अरोचकामशूलघ्नो ज्वरघ्नः पाचनः स्मृतः॥ ५६॥ ह्रीवेरादिः।
धातकीविल्वलोध्राणि पाठालज्जालुवत्सकैः।
धान्यकातिविषामुस्तबालकं गजपिप्पली।
एभिः कृतं शृतं शीतं शिशुभ्यः क्षौद्रसंयुतम्।
प्रदद्यादवलेहं वा सर्वातीसारशान्तये॥ ५७॥ धातक्यादिः।
शालपर्णी बलाविल्वधान्यशुण्ठीकृतः शृतः।
आध्मानशूलसहितां वातजां ग्रहणीं जयेत्॥५८॥ शालपर्ण्यादिः

CCO. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

गुडूच्यतिविषाशुण्ठीमुस्तैः क्वाथः कृतो जयेत् ।
आमानुसक्तां ग्रहणीं ग्राही पाचन-दीपनः ॥५९॥ चातुर्भद्रकम्
यवधान्यपटोलानां क्वाथः सक्षौद्रशर्करः ।
योज्यश्छर्द्यतिसारेषु विल्वाम्राखिभवस्तथा॥६०॥इन्द्रयवादिः ।
त्रिफला देवदारुश्च मुस्ता मूषककर्णिका ।
शिग्रुरेतैः कृतः क्वाथः पिप्पलीचूर्णसंयुतः ।
विड़ङ्ग-चूर्ण-युक्तश्च कृमिघ्नः क्रिमिरोगहा ॥६१॥ त्रिफलादिः ।
फलत्रिकाऽमृतातिक्तानिम्बकैरातवासकैः ।
जयेन्मधुयुतः क्वाथः कामलां पाण्डुतान्तथा ॥ ६२ ॥

फलत्रिकादिः ।

पुनर्नवाऽभयानिम्बदार्वीतिक्तपटोलकैः ।
गुड़ूचीनागरयुतैः क्वाथो गोमूत्रसंयुतः ॥ ६४ ॥
पाण्डुकासोदरश्वासशूलसर्वाङ्गशोथहा ।
वासाद्राक्षाभयाक्वाथः पीतः सक्षौद्रशर्करः ।
निहन्ति रक्तपित्तार्त्तिश्वासकासञ्च दारुणम् ॥ ६५ ॥

रक्तपित्ते वासकक्वाथः ।

रक्तपित्तं क्षयं कासं श्लेष्मपित्तज्वरन्तथा ।
केवलो वासकः क्वाथः पीतः क्षौद्रेण नाशयेत् ॥ ६६ ॥
वासाक्षुद्राऽमृताक्वाथः क्षौद्रेण ज्वरकासहा ।
कासघ्नः पिप्पलीचूर्णयुक्तः क्षुद्राकृतस्तथा ॥ ६७ ॥
क्षुद्राकुलत्थवासाभिर्नागरेण च साधितः ।
क्वाथः पुष्करचूर्णाढ्यः श्वासकासौ निवारयेत् ॥ ६८ ॥
रेणुकापिप्पलीक्वाथो हिङ्गुकल्केन संयुतः ।
पानादेव हि पञ्चापि हिक्का नाशयति क्षणात् ॥ ६९ ॥
विल्वत्वचो गुडूच्या वा क्वाथः क्षौद्रेण संयुतः ।
जयेत्त्रिदोषजांछर्दिं पर्पटः पित्तजां तथा ॥ ७० ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

अथ गृध्रस्यां योगद्वयमाह ।

हिङ्गुपौष्करचूर्णाढ्यो दशमूलशृतो जयेत् ।
गृध्रसीं केवलः क्काथः शेफालीपत्रजस्तथा ॥ ७१ ॥
रास्नामृतामहादारुनागरैरण्डजं शृतम् ।
सप्तधातुगते वाते सामे सर्वाङ्गगे पिबेत् ॥७२॥ रास्नापञ्चकम् ।
रास्नागोक्षुरकैरण्डदेवदारु पुनर्नवा ।
गुडूच्यारग्वधश्चैव क्काथमेषां विपाचयेत् ॥७३॥ रास्नासप्तकम् ।
शुण्ठीचूर्णेन संयुक्तं पिबेज्जङ्घाकटीग्रहे ।
पार्श्वपृष्ठोरुपीडायामामवाते सुदुस्तरे ॥ ७४ ॥
रास्ना द्विगुणभागा स्यादेकभागा ततः परा ।
धन्वयासबलैरण्डदेवदारु सटी वचा ॥ ७५ ॥
वासको नागरं पथ्या चव्यमुस्तपुनर्नवा ।
गुडूची वृद्धदारुश्च शतपुष्पा च गोक्षुरः ॥ ७६ ॥
अश्वगन्धा प्रतिविषा कृतमालः शतावरी ।
कृष्णासहचरश्चैव धान्यकं बृहतीद्वयम् ॥ ७७ ॥
एभिः कृतं पिबेत् क्काथं शुण्ठीचूर्णेन संयुतम् ।
कृष्णाचूर्णेन वा योगराजो गुग्गुलुनाथवा ॥ ७८ ॥
अजमोदादिना वापि तैलेनैरण्डजेन वा ।
सर्वाङ्गकम्पे कुब्जत्वे पक्षाघातेऽवबाहुके ॥ ७९ ॥
गृध्रस्यामामवाते च श्लीपदे चापतानके ।
अन्त्रवृद्धौ तथाध्माने जङ्घाजानुगदेऽर्दिते ॥ ८० ॥
शुक्रामये मेढ्ररोगे वन्ध्यायोन्यामयेषु च ।
महारास्नादिराख्यातो ब्रह्मणा गर्भकारणम् ॥ ८१ ॥

महारास्नादिः ।

एरण्डो वीजपूरश्च गोक्षुरर्बृहतीद्वयम् ।
अश्मभेदस्तथा विल्व एतन्मूलैः कृतः शृतः ॥ ८२ ॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

एरण्डतैलं हिङ्ग्वाढ्यः सयवक्षारसैन्धवः ।
स्तनस्कन्धकटीमेढ्रहृदयोत्थां व्यथां जयेत् ॥८३॥ एरण्डसप्तकः ।
नागरैरण्डजः क्वाथः क्वाथ इन्द्रयवस्य च ।
हिङ्गुसौवर्चलोपेतो वातशूलनिवारणः ॥ ८४ ॥
त्रिफलारग्वधक्वाथः शर्कराक्षौद्रसंयुतः ।
रक्तपित्तहरो दाहपित्तशूलनिवारणः ॥ ८५ ॥ इति पित्तशूले ।
एरण्डमूलद्विपलं जलेऽष्टगुणिते पचेत् ।
तत्क्वाथो यावशूकाढ्यः पार्श्वहृत्कफशूलहा ॥ ८६ ॥
दशमूलकृतः क्वाथः सयवक्षारसैन्धवः ।
हृद्रोगगुल्मशूलानि कासं श्वासञ्च नाशयेत् ॥ ८७ ॥
हरीतकीदुरालभाकृतमालकगोक्षुरैः ।
पाषाणभेदसहितैः क्वाथो माक्षिकसंयुतः ।
विबन्धे मूत्रकृच्छ्रे च सदाहे सरुजे हितः ॥ ८८ ॥
हरीतक्यादिर्मूत्रकृच्छ्रे ।
वीरतरुद्वयवन्दाकाख्यः सहचरत्रयम् ।
कुशद्वयं नलो गुन्द्रा वकपुष्पोऽग्निमन्थकः ॥ ८९ ॥
मूर्वा पाषाणभेदश्च श्योनाको गोक्षुरस्तथा ।
अपामार्गश्च कमलं ब्राह्मी चेति गणो वरः ॥ ९० ॥
वीरतर्वादिरित्युक्तः शर्कराश्मरिकृच्छ्रहा ।
मूत्राघातवायुरोगान्नाशयेन्निखिलानपि ॥ ९१॥ वीरतर्वादिः ।
एलामधुकगोकण्टरेणुकैरण्डवासकः ।
कृष्णाश्मभेदसहितः क्वाथ एषां सुसाधितः ।
शिलाजतुयुतः पेयः शर्कराश्मरिकृच्छ्रहा ॥ ९२ ॥ एलादिः ।
समूलगोक्षुरक्वाथः सितामाक्षिकसंयुतः ।
नाशयेन्मूत्रकृच्छ्राणि तथा चोष्णसमीरणम् ॥ ९३ ॥
[अथ प्रमेहे] वर्थादार्व्यब्ददारूणां क्वाथो क्षौद्रेण मेहहा ।


CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

वत्सकत्रिफलादार्वीमुस्तावीजकजस्तथा ॥ ९४ ॥
फलत्रिकाब्ददार्वीणां विशालायाः शृतं पिबेत् ।
निशाकल्कयुतं सर्वप्रमेहविनिवृत्तये ॥ ९५ ॥ फलत्रिकादिः ।
दार्वी रसाञ्जनं मुस्तं भल्लातः श्रीफलं वृषः ।
कैरातश्च पिबेदेषां क्वाथं शीतं समाक्षिकम् ।
जयेत्सशूलं प्रदरं पीतश्वेतासितारुणम् ॥ ९६ ॥ दार्व्यादिः ।
न्यग्रोधप्लक्षकोशाम्रवेतसो वदरी तुणिः ।
मधुयष्टी प्रियालश्च रोद्रद्वयमुदुम्बरः ॥ ९७ ॥
पिप्पलश्च मधूकश्च तथा पारिशपिप्पलः ।
सल्लकी तिन्दुकी जम्बूद्वयमाम्रतरुः शिवा ॥ ९८ ॥
कदम्बककुभौ चैव भल्लातकफलानि च ।
न्यग्रोधादिगणक्वाथं यथालाभञ्च कारयेत् ॥ ९९ ॥
अयं क्वाथो महाग्राही व्रण्यो भग्नञ्च साधयेत् ।
योनिदोषहरो दाहमेदोमेहविषापहः ॥ १०० ॥

न्यग्रोधादिकषायः ।

विल्वोऽग्निमन्थः श्योनाकः काश्मर्यपाटलिस्तथा ।
क्वाथ एषां जयेन्मेदोदोषं क्षौद्रेण संयुतः ॥ १०१ ॥
क्षौद्रेण त्रिफलाक्वाथः पीतो मेदोहरः स्मृतः ।
शीतीभूतं तथोष्णाम्बु मेदोहृत् क्षौद्रसंयुतम् ॥ १०२ ॥
चव्यचित्रकविश्वानां साधितो देवदारुणा ।
क्वाथः त्रिवृच्चूर्णयुतो गोमूत्रेणोदरान् जयेत् ॥ १०३ ॥
पुनर्नवामृतादारुपथ्यानागरसाधितः ।
गोमूत्रगुग्गुलुयुतः क्वाथः शोथोदरापहः ॥ १०४
पथ्यारोहितकक्वाथं यवक्षारकणायुतम् ।
पिबेत्प्रातर्यकृत्प्लीहगुल्मोदरनिवृत्तये ॥ १०५ ॥
[अथ शोथे] पुनर्नवा दारु निशा निशा शुण्ठी हरीतकी ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

गुडूची चित्रको भार्गी देवदारुकृतैः स्मृतः।
पाणिपादोदरमुखप्राप्तं शोफं निवारयेत्॥ १०६॥
त्रिकोद्भवं क्वाथं गोमूत्रेणैव पाचयेत्॥
वातश्लेष्मकृतं हन्ति शोथं वृषणसम्भवम्॥ १०७॥
[अथान्त्रवृद्धौ] रास्नामृता वला यष्टी गोकण्टैरण्डजः स्मृतः।
एरण्डतैलसंयुक्तो वृद्धिमन्त्रभवां जयेत्॥ १०८॥

अथ गण्डमालायां योगद्वयमाह।

काञ्चनारत्वचः क्वाथः शुण्ठीचूर्णेन नाशयेत्।
गण्डमालान्तथा क्वाथः चौद्रेण वरुणत्वचः॥ १०९॥
साखोटवल्कलक्वाथं गोमूत्रेण युतं पिबेत्।
श्लीपदानां विनाशाय मेदोदोषनिवृत्तये॥ ११०॥
पुनर्नवावरुणयोः क्वाथोऽन्तर्विद्रधिं जयेत्॥ १११॥
तथा शिग्रुभवः क्वाथो हिङ्गुसैन्धवसंयुतः।
वरुणादिगणक्वाथमपक्वे मध्यविद्रधौ॥ ११२॥
ऊषकादिरजोयुक्तं पिबेच्छमनहेतवे॥ ११३॥
वरुणो वकपुष्पश्च विल्वापामार्गचित्रकाः।
अग्निमन्थद्वयं शिग्रु द्वयञ्च वृहतीद्वयम्॥ ११४॥
सैरेयकत्रयं मूर्वा मेषशृङ्गी किरातकः।
अजाशृङ्गी च विम्बी च करञ्जश्च शतावरी॥ ११५॥
वरुणादिगणक्वाथः कफमेदोहरः स्मृतः।
हन्ति गुल्मं शिरःशूलं तथाभ्यन्तरविद्रधीन्॥११६॥ वरुणादिः।
खदिरत्रिफलाक्वाथो महिषीघृतसंयुतः।
विड़ङ्गचूर्णयुक्तश्च भगन्दरविनाशनः॥ ११७॥
[अथोपदंशे] पटोलत्रिफलानिम्बकिरातखदिरासनैः।
क्वाथः पीतो जयेत्सर्वानुपदंशान् सुगुग्गुलुः॥ ११८॥
अमृतैरण्डवासानां क्वाथ एरण्डतैलयुक्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पीतः सर्वाङ्गसञ्चारि वातरक्तं जयेद्ध्रुवम् ॥ ११९ ॥

पटोल त्रिफला तिक्ता गुडूची च शतावरी।
एतत्क्वाथो जयेत् पीतो वातास्रं दाहसंयुतम् ॥ १२० ॥

पटोलादिः।

क्वाथोऽवल्गुजचूर्णाढ्यो धात्रीखदिरसारयोः।
जयेत् सुशीलितो नित्यं श्वित्रं पथ्याशिनां नृणाम् ॥ १२१ ॥

अवल्गुजादिः।

मञ्जिष्ठात्रिफलातिक्तावचादारुनिशामृताः।
निम्बश्चैषां कृतः क्वाथो वातरक्तविनाशनः।
पामां कपालिकां कुष्ठं रक्तमण्डलजिन्मतः ॥ १२२ ॥

लघुमञ्जिष्ठादिः।

मञ्जिष्ठामुस्तकुटजगुडूचीकुष्ठनागरैः।
भार्गीक्षुद्रावचानिम्बनिशाद्वयफलत्रिकैः ॥ १२३ ॥
पटोलकटुकामूर्वाविडङ्गासनचित्रकैः।
शतावरीत्रायमाणाकृष्णेन्द्रयववासकैः ॥ १२४ ॥
भृङ्गराजमहादारुपाठाखदिरचन्दनैः।
त्रिवृद्वरुणकैरातवाकुचीकृतमालकैः ॥ १२५ ॥
शाखोटकमहानिम्बकरंजातिविषाजलैः।
इन्द्रवारुणिकानन्तासारिवापर्पटैः समैः ॥ १२६ ॥
एभिः कृतं पिबेत् क्वाथं कणागुग्गुलुसंयुतम्।
अष्टादशसु कुष्ठेषु वातरक्तेऽर्दिते तथा ॥ १२७ ॥
उपदंशे श्लीपदे च प्रसुप्तौ पक्षघातके।
मेदोदोषे नेत्ररोगे मञ्जिष्ठादिः प्रशस्यते ॥ १२८ ॥

बृहन्मञ्जिष्ठादिः।

पथ्याक्षधात्रीभूनिम्बनिशानिम्बामृतायुतैः।
कृतः क्वाथः षडङ्गोऽयं सगुडः शीर्षशूलहृत् ॥ १२९ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

भूशृङ्गकर्णशूलानि तथार्द्धशिरसो रुजम् ।
सूर्य्यावर्त्तं शङ्खकञ्च दन्तपालिञ्च तद्रुजम् ।
नक्तान्ध्यं पटलं शुक्रं चक्षुःपीडां व्यपोहति ॥१३०॥ पथ्यादिः ।
वासाविश्वामृतादार्वीरक्तचन्दनचित्रकैः ।
भूनिम्बनिम्बकटुकापटोलत्रिफलाम्बुदैः ॥ १३१ ॥
यवकालिङ्गकुटजैः क्वाथः सर्वाक्षिरोगहा ।
वैस्वर्य्यं पीनसं श्वासं नाशयेदुरसः क्षतम् ॥ १३२ ॥ वासादिः ।
अमृतात्रिफलाक्वाथः पिप्पलीचूर्ण संयुतः ।
सक्षौद्रः शीतलो नित्यं सर्वनेत्रव्यथां जयेत् ॥१३३॥ अमृतादिः
अश्वत्थोदुम्बरप्लक्षवटवेतसजः स्मृतः । शीलितो
व्रणशोथोपदंशानां नाशनः क्षालनात्स्मृतः॥१३४॥अश्वत्थादिक्वाथः
[प्रमथ्या] प्रमथ्या प्रोच्यते द्रव्यपलात्कल्कीकृतात् शृतात्
तोयेऽष्टगुणिते तस्याः पानमाहुः पलद्वयम् ॥ १३५ ॥
मुस्तकेन्द्रयवैः सिद्धा प्रमथ्या द्विपलोन्मिता ।
सुशीता मधुसंयुक्ता रक्तातीसारनाशिनी ॥ १३६ ॥
[यवागूः] साध्यं चतुःपलं द्रव्यं चतुःषष्टिपलेऽम्बुनि ।
तत्क्वाथेनार्द्धशिष्टेन यवागूं साधयेद्घनाम् ॥ १३७ ॥
आम्राऽम्रातकजम्बूत्वक्कषाये विपचेद्बुधः ।
यवागूं शालिभिर्युक्तान्तां भुक्ता ग्रहणीं जयेत् ॥ १३८ ॥
[यूषः] कल्कद्रव्यपलं शुण्ठी पिप्पली चार्द्धकर्षिका ।
वारिप्रस्थेन विपचेत्स द्रवो यूष उच्यते ॥ १३९ ॥
कुलत्थयवकोलैश्च मुद्गैर्मूलकशुङ्किकैः । शुष्ककैः २ पा.
शुण्ठीधान्याकयुक्तैश्च यूषः श्लेष्मानिलापहः ॥ १४० ॥
सप्तमुष्टिक इत्येष सन्निपातज्वरान् जयेत् ।
आमवातहरः कण्ठहृद्वक्त्राणां विशोधनः॥१४१॥ सप्तमुष्टिकयूषौ
तुषं द्रव्यपलं साध्यं चतुःषष्टिपले जले ।

शुंठकैरिति पाठान्तरम्

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

अर्द्धशिष्टञ्च तद्देयं पाने भक्तादिसंविधौ ॥ १४२ ॥

उशीरपर्पटोदीच्यमुस्तनागरचन्दनैः ।

जलं शृतं हिमं पेयं पिपासाज्वरनाशनम् ॥ १४३ ॥

इति पानादिकल्पना ।

अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा ।

अथवा क्वथनेनैव सिद्धमुष्णोदकं पिबेत् ॥ १४४ ॥

श्लेष्मामवातमेदोघ्नं वस्तिशोधनदीपनम् ।

कासश्वासज्वरान् हन्ति पीतमुष्णोदकं निशि ॥ १४५ ॥

इति उष्णोदकम् ।

[क्षीरपाकविधिः] क्षीरमष्टगुणं द्रव्यात् क्षीरान्नीरं चतुर्गुणम् ।

क्षीरावशेषं तत्पीतं शूलमामोद्भवं जयेत् ॥ १४६ ॥

[अथान्नप्रक्रिया] अथान्नप्रक्रिया चैव प्रोच्यते नातिविस्तरात् ।

यवागूः षड्गुणजले सिद्धा स्यात् कृशरा घना ॥ १४७ ॥

तण्डुलैर्मुद्गमाषैश्च तिलैर्वा साधिता हिता ।

यवागूर्ग्राहिणी बल्या तर्पणी वातनाशिनी ॥१४८॥ इति यवागूः

विलेपी च घना सिक्थैः सिद्धा नीरे चतुर्गुणे ।

विलेपी तर्पणी हृद्या मधुरा पित्तनाशिनी ॥ १४९ ॥

इति विलेपी ।

द्रवाधिका स्वल्पसिक्था चतुर्दशगुणे जले ।

सिद्धा पेया बुधैर्ज्ञेया यूषः किञ्चिद्घनः स्मृतः ॥ १५० ॥

पेया लघुतरा ज्ञेया ग्राहिणी धातुपुष्टिदा ।

यूषोबल्यस्तन्यकण्ठ्यो लघुपाकी कफापहः ॥१५१॥ पेयायूषौ ।

जले चतुर्दशगुणे तण्डुलानां चतुःपलम् ।

विपचेत् स्रावयेन्मण्डं स भक्तो मधुरो लघु ॥१५२॥ इति भक्तः ।

नीरे चतुर्दशगुणे सिद्धो मण्डस्त्वसिक्थकः ।

शुण्ठीसैन्धवसंयुक्तः पाचनो दीपनः स्मृतः ॥१५३॥ इति शुद्धमण्डः

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मुद्गतण्डुल

धान्यत्रिकटुसिन्धूत्थयुक्तस्तक्रेण योजितः ।
भृष्टश्च हिङ्गुतैलाभ्यां स मण्डोऽष्टगुणः स्मृतः ॥ १५४ ॥
दीपनः प्राणदो वस्तिशोधनो रक्तवर्द्धनः ।
ज्वरजित्सर्वदोषघ्नो मण्डोऽष्टगुण उच्यते ॥१५५॥इत्यष्टगुणमण्डः
सुकण्डितैस्तथा भृष्टैर्वाद्यमण्डो यवैर्भवेत् ।
कफपित्तहरः कण्ठ्यो रक्तपित्तप्रसादनः ।१५६॥इति वाद्यमण्डः
लाजैर्वा तण्डुलैर्भृष्टैर्लाजमण्डः प्रकीर्त्तितः ।
श्लेष्मपित्तहरो ग्राही पिपासाज्वरजिन्मतः॥१५७॥ लाजमण्डः ।

इति क्वाथादिकल्पना नाम द्वितीयोऽध्यायः ।

---

## अथ तृतीयोऽध्यायः ।

### अथ फाण्टकल्पना ।

चुर्णे द्रव्यपले सम्यक् जलमुष्णं विनिक्षिपेत् ।
मृत्पात्रे कुड़वोन्मानं ततस्तु स्रावयेत्पटात् ॥ १ ॥
सः स्याच्चूर्णद्रवः फाण्टस्तन्मानं द्विपलोन्मितम् ।
मधुसितागुड़ादींश्च क्वाथवत्तत्र निक्षिपेत् ॥ २ ॥
मधूकपुष्पं मधुकं चन्दनं सपरूषकम् ।
मृणालं कमलं लोध्रं गम्भारी नागकेशरम् ॥ ३ ॥
त्रिफलासारिवाद्राक्षालाजाः कोष्णजले क्षिपेत् ।
सिता मधुयुता पेया फाण्टो वासौ हिमोऽथवा ॥ ४ ॥
वातपित्तज्वरं दाहं तृष्णामूर्च्छारतिभ्रमान् ।
रक्तपित्तं मदं हन्यान्नात्र कार्य्या विचारणा ॥५॥ मधूकफाण्टः ।
आम्रजम्बूकिशलयैः वटशृङ्गप्ररोहकैः ।
उशीरेण कृतः फाण्टः सक्षौद्रो ज्वरनाशनः ।
पिपासाच्छर्द्यतीसारान् मूर्च्छां जयति दुस्तराम् ॥ ६ ॥

आम्रादिफाण्टः ।

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मधूकपुष्पकश्मारीचन्दनोशीरधान्यकैः।
द्राक्षया च कृतः फाण्टः शीतः शर्करया युतः।
तृष्णापित्तहरः प्रोक्तो दाहमूर्च्छाभ्रमान् जयेत्॥ ७॥
लघुमधूकपुष्पादिफाण्टः।

[मन्थः] मन्थोऽपि फाण्टभेदः स्यात्तेन चात्रैव कथ्यते।
जले चतुष्पले शीते क्षुण्णं द्रव्यपलं क्षिपेत्।
मृत्पात्रे मन्थयेत्सम्यक् तस्माच्च द्विपलं पिबेत्॥ ८॥
खर्जूरदाड़िमीद्राक्षातिन्तिड़ीकाम्लिकामलैः।
सपरूषैः कृतो मन्थः सर्वमद्यविकारनुत्॥९॥ खर्जूरादिमन्थः।
क्षौद्रयुक्ता मसूराणां सक्तवो दाड़िमाम्भसा।
मथिता वारयन्त्याशु छर्दिं दोषत्रयोद्भवाम्॥१०॥ मसूरादिमन्थः
प्लाविताः शीतनीरेण सघृतैर्यवसक्तुभिः।
नातिसान्द्रद्रवैर्मन्थस्तृष्णादाहास्रपित्तहा॥ ११॥

---

## अथ चतुर्थोऽध्यायः।

[हिमकल्पना] क्षुण्णं द्रव्यपलं सम्यक् षड्भिर्नीरपलैः प्लुतम्।
निशोषितं हिमः स स्यात्तथा शीतकषायकः॥ १॥
तन्मानं फाण्टवज्ज्ञेयं सर्वत्रैवैष निश्चयः।
आम्रं जम्बूञ्च ककुभं चूर्णीकृत्य जले क्षिपेत्।
हिमं तस्य पिबेत्प्रातः सक्षौद्रं रक्तपित्तजित्॥२॥ आम्रादिर्हिमः
मरिचं मधुयष्टी च काकोडुम्बरपल्लवम्।
नीलोत्पलं हिमस्तस्य तृष्णाच्छर्दिनिवारणः॥ ३॥
मरिचादिर्हिमः।
नीलोत्पलं बला द्राक्षा मधूकं मधुकं तथा।
उशीरं पद्मकञ्चैव काश्मरी च परूषकम्॥ ४॥
एतच्छीतकषायश्च वातपित्तज्वरान् जयेत्।

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

सप्रलापभ्रमच्छर्दिमोहतृष्णानिवारणः ॥५॥ नीलोत्पलादिः।
अमृताया हिमः पेयो जीर्णज्वरहरः स्मृतः।
वासायाश्च हिमः कासं रक्तपित्तज्वरान् जयेत् ॥६॥ अमृतादिः।
प्रातः सशर्करः पेयो हिमो धान्यकसम्भवः।
अन्तर्दाहं तथा तृष्णां जयेच्छ्रोतो विशोधनः ॥ ७ ॥ स्रोतोविशोधनः
धान्याकधात्रीवासानां द्राक्षापर्पटयोर्हिमः।
रक्तपित्तज्वरं दाहं तृष्णां शोषञ्च नाशयेत् ॥८॥ धान्यादिर्हिमः।

---

## अथ पञ्चमोऽध्यायः। भवेत्

[कल्ककल्पना] द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं पिबेत्।
प्रक्षेपा[illegible] कल्कास्ते तन्मानं कर्षसम्मितम् ॥ १ ॥
कल्के मधु घृतं तैलं देयं द्विगुणमात्रया।
सितां गुडं समं दद्याद् द्रवा देयाश्चतुर्गुणाः ॥ २ ॥
त्रिवृद्धा पञ्चवृद्धा वा सप्तवृद्धाथवा कणाः।
पिबेत् पिष्टा दशदिनं तथाचैवापकर्षयेत् ॥ ३ ॥ ...दुग्धेनेति शेषः
एवं विंशद्दिनं सिद्धं पिप्पलीवर्द्धमानकम्।
अनेन पाण्डुवातास्रकासश्वासारुचिज्वराः।
उदरार्शःक्षयश्लेष्मवाता नश्यन्त्युरोग्रहः ॥४॥ पिप्पलीवर्द्धमानम्।
लेपान्निम्बदलैः कल्को व्रणशोधनरोपणः।
भक्षणाच्छर्दिकुष्ठानि पित्तश्लेष्मक्रमीन् जयेत् ॥ ५ ॥
महानिम्बजटाकल्को गृध्रसीनाशनः स्मृतः।
शुद्धकल्को रसो नस्यतिलतैलेन मिश्रितः।
वातरोगान् जयेत्तीव्रान् विषमज्वरनाशनः ॥ ६ ॥
पक्वकन्दरसो नस्यगुटिका निस्तुषीकृताः।
पाटयित्वा च मध्यस्थं दूरीकुर्य्यात् तदङ्कुरम् ॥ ७ ॥
तदुग्रगन्धनाशाय रात्रौ तक्रे विनिक्षिपेत्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

अपनीय च तन्मध्याच्छिलायां पेषयेत्ततः ।
तन्मध्ये पञ्चमांशेन चूर्णमेषां विनिक्षिपेत् ॥ ८ ॥
सौवर्चलं यवानीञ्च भर्जितं हिङ्गुसैन्धवम् ।
कटुत्रिकं जीरकञ्च समभागानि कारयेत् ॥ ९ ॥
एकीकृत्य ततः सर्वं कल्कं कर्षप्रमाणतः ।
खादेदग्निबलापेक्षी ऋतुदोषाद्यपेक्षया ॥१०॥
अनुपानं ततः कुर्य्यादेरण्डशृतमन्वहम् ।
सर्वाङ्गैकाङ्गजं वातमर्दितञ्चापतन्त्रकम् ॥ ११ ॥
अपस्मारमथोन्मादमूरुस्तम्भञ्च गृध्रसीम् ।
उरःपृष्ठकटीपार्श्व कुक्षिपीड़ां क्रिमीन् जयेत् ॥ १२ ॥
अजीर्णमातपं रोषमतिनीरं पयो गुड़म् ।
रसोनमश्नन् पुरुषस्त्यजेदेतन्निरन्तरम् ।
मद्यं मांसन्तथाम्लञ्च रसं सेवेत नित्यशः ॥१३॥ इति रसोनकल्कः

पिप्पली पिप्पलीमूलं भल्लातकफलानि च ।
एतत्कल्कश्च सक्षौद्र ऊरुस्तम्भनिवारणः ॥ १४ ॥
विष्णुक्रान्ताजटाकल्कः सिताक्षौद्रघृतैर्युतः ।
परिणामभवं शूलं नाशयेत्सप्तभिर्दिनैः ॥ १५ ॥
शुण्ठीतिलगुड़ैः कल्कं दुग्धेन सह योजयेत् ।
परिणामभवं शूलमामवातञ्च नश्यति ॥ १६ ॥
अपामार्गस्य बीजानां कल्कस्तण्डुलवारिणा ।
पीतो रक्तार्शसां नाशं कुरुते नात्र संशयः ॥ १७ ॥
वदरीमूलकल्केन तिलकल्कश्च योजितः ।
मधुक्षीरयुतः कुर्य्याद्रक्तातीसारनाशनम् ॥ १८ ॥
कुष्माण्डकरसैः पिष्टां लाक्षां कर्षद्वयं पिबेत् ।
रक्तक्षयमुरोघातं क्षयरोगञ्च नाशयेत् ॥ १९ ॥
तण्डुलीयजटाकल्कः सक्षौद्रः सरसाञ्जनः ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

तण्डुलोदकसम्पीतो रक्तप्रदरनाशनः ॥ २० ॥
अङ्कोलमूलकल्कश्च सक्षौद्रस्तण्डुलाम्बुना ।　　अंकोल प्र० पटऐनें
अतीसारहरः प्रोक्तस्तथा विषहरः स्मृतः ॥ २१ ॥
वन्ध्याककोंटिकामूलं पाटलाया जटाऽथवा ।
घृतेन विल्वमूलं वा द्विविधं नाशयेद्विषम् ॥ २२ ॥
अभयासैन्धवकणाशुण्ठीकल्कस्त्रिदोषहा ।
पथ्यासैन्धवशुण्ठीभिः कल्को दीपनपाचनः ॥ २३ ॥
त्रिवृत्पलाशवीजानि पारसीकयवानिका ।
कम्पिल्लकं विडङ्गञ्च गुडश्च समभागिकः ॥ २४ ॥
तक्रेण कल्क एतेषां पीतः क्रिमिगणापहः ।
नवनीततिलैः कल्को जेता रक्तार्शसां स्मृतः ॥ २५ ॥
नवनीतसितानागकेशरैश्चापि तद्विधः ।
पीतो मसूरयूषेण कल्कः शुण्ठीसलाटुजः ।
जयेत् संग्रहणीं तद्वत्तक्रेण वृहतीभवः ॥ २६ ॥

---

## अथ षष्ठोऽध्यायः ।

[चूर्णकल्पना] अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम् ।
तत्स्याच्चूर्णं रजः क्षोदस्तन्मात्रा कर्षसम्मिता ॥ १ ॥
चूर्णे गुडः समो देयः शर्करा द्विगुणा भवेत् ।
चूर्णेषु भर्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत् ॥ २ ॥
लिहेच्चूर्णं द्रवैः सर्वैर्घृताद्यैर्द्विगुणोन्मितैः ।
पिबेच्चतुर्गुणैरेव चूर्णमालोडितं द्रवैः ॥ ३ ॥
चूर्णवल्लेहगुटिकाकल्कानामनुपानकम् ।
वातपित्तकफातङ्के त्रिद्व्येकपलमाहरेत् ॥ ४ ॥
यथा तैलं जले प्राप्तं क्षणेनैव प्रसर्पयेत् ।
अनुपानबलादङ्गे तथा सर्पति भेषजम् ॥ ५ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

द्रवेण यावता सम्यक् चूर्णं सर्वं प्लुतं भवेत् ।
भावनायाः प्रमाणन्तु चूर्णे प्रोक्तं भिषग्वरैः ॥ ६ ॥
आमलं चित्रकं पथ्या पिप्पली सैन्धवस्तथा ।
चूर्णितोऽयं गणो ज्ञेयः सर्वज्वरविनाशनः ।
भेदी रुचिकरः श्लेष्मजेता दीपनपाचनः ॥ ७ ॥

आमलक्यादिचूर्णम् ।

मधुना पिप्पलीचूर्णं लिहेत् कासज्वरापहम् ।
हिक्काश्वासहरं कण्ठ्यं प्लीहघ्नं बालकोचितम् ॥८॥ मधुपिप्पली
एका हरीतकी योज्या द्वौ तु योज्यौ विभीतकौ ।
चत्वार्य्यामलकान्येवं त्रिफलैषा प्रकीर्त्तिता ॥ ९ ॥
त्रिफला मेहशोथघ्नी नाशयेद्विषमज्वरान् ।
दीपनी श्लेष्मपित्तघ्नी कुष्ठहन्त्री रसायनी ।
सर्पिर्मधुभ्यां संयुक्ता सर्वनेत्रामयान् जयेत् ॥ १० ॥

इति त्रिफला ।

पिप्पली मरिचं शुण्ठी त्रिभिस्त्र्यूषणमुच्यते ।
दीपनं श्लेष्ममेदोघ्नं कुष्ठपीनसनाशनम् ।
जयेदरोचकं सामं मेहगुल्मगलामयान् ॥ ११ ॥ त्र्यूषणम्
पिप्पलीचव्यविश्वाह्वापिप्पलीमूलचित्रकैः ।
पञ्चकोलमिति ख्यातं रुच्यं पाचनदीपनम् ।
आनाहप्लीहगुल्मघ्नं शूलश्लेष्मोदरापहम् ॥ १२ ॥पञ्चकोलम् ।
त्रिगन्धमेलात्वक्पत्रैश्चातुर्जातं सकेशरैः ।
त्रिगन्धं सचतुर्जातं रूक्षोष्णं लघुपित्तकृत् ।
वर्ण्यं रुचिकरन्तीक्ष्णं विषश्लेष्मामयान् जयेत् ॥ १३ ॥

त्रिगन्धचातुर्जातकम् ।

काकोली क्षीरकाकोली जीवकर्षभकौ तथा ।
मेदा चान्या महामेदा जीवन्ती मधुकन्तथा ॥१४॥

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मुद्गपर्णी माषपर्णी जीवनीयो गणस्त्वयम् ।
जीवनीयगणः स्वादुर्गर्भसन्धानकृद् गुरुः ॥ १५ ॥
स्तन्यकृद् बृंहणो वृष्यः स्निग्धः शीतस्तृषापहः ।
रक्तपित्तं क्षयं शोथं ज्वरदाहानिलान् जयेत् ॥१६॥ जीवनीयगणः
द्वे मेदे द्वे च काकोल्यौ जीवकर्षभकौ तथा ।
ऋद्धिवृद्धी च तैः सर्वैरष्टवर्ग उदाहृतः ।
अष्टवर्गो बुधैः प्रोक्तो जीवनीयसमो गुणैः ॥ १७ ॥ अष्टवर्गः ।
सिन्धुसौवर्चलञ्चैव विडं सामुद्रिकं गडम् ।
एकद्वित्रिचतुःपञ्चलवणानि क्रमाद्विदुः ॥ १८ ॥
तेषु मुख्यं सैन्धवं स्यादनुक्ते तत्प्रयोजयेत् ।
सैन्धवाद्यं रोमकान्तं ज्ञेयं लवणपञ्चकम् ॥ १९ ॥
मधुरं सृष्टविण्मूत्रं स्निग्धं सूक्ष्मं बलापहम् ।
वीर्य्योष्णं दीपनं तीक्ष्णं कफपित्तविवर्द्धनम् ॥२०॥ लवणपञ्चकम्
सर्जिका यावशूकश्च क्षारयुग्ममुदाहृतम् ।
ज्ञेयौ वह्निसमौ क्षारौ स्वर्जिकायावशूकजौ ॥ २१ ॥
क्षाराश्चान्येऽपि गुल्मार्शोग्रहणीरुक्छिदा सराः ।
पाचनाः क्रिमिपुंस्त्वघ्नाः शर्कराश्मरिनाशनाः ॥२२॥ क्षाराः ।
त्रिफला रजनीयुग्मं कण्टकारीयुगं सटी ।
त्रिकटुग्रन्थिकं मूर्वा गुडूची धन्वयासकः ॥ २३ ॥
कटुकी पर्पटी मुस्तं त्रायमाणञ्च बालकम् ।
निम्बः पुष्करमूलञ्च मधुयष्टीसवत्सकः ॥ २४ ॥
यवानीन्द्रयवौ भार्गी शिग्रुवीजं सुराष्ट्रजाः ।
वचात्वक्पद्मकोशीरं चन्दनातिविषा बला ॥ २५ ।
शालपर्णी पृश्निपर्णी विड़ङ्गं तगरन्तथा ।
चित्रको देवकाष्ठञ्च चव्यं पत्रं पटोलजम् ॥ २६ ॥
जीवकर्षभकौ चैव लवङ्गं वंशलोचनम् ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पुण्डरीकञ्च काकोलीपत्रजं जातिपत्रकम् ॥ २७ ॥
तालीशपत्रञ्च तथा समभागानि चूर्णयेत्।
सर्वचूर्णस्य चार्द्धांशं कैरातं निक्षिपेत् सुधीः ॥ २८ ॥
एतत्सुदर्शनं नाम चूर्णं दोषत्रयापहम्।
ज्वरांश्च निखिलान् हन्यान्नात्र कार्य्या विचारणा ॥ २९ ॥
पृथग्द्वन्द्वागन्तुकांश्च धातुस्थान् विषमज्वरान्।
सन्निपातोद्भवांश्चापि मानसानपि साधयेत् ॥ ३० ॥
शीतज्वरैकाहिकादीन् मोहं तन्द्रां भ्रमं तृषाम्।
श्वासं कासञ्च पाण्डुञ्च हृद्रोगं हन्ति कामलाम् ॥ ३१ ॥
त्रिकपृष्ठकटीजानुपार्श्वशूलनिवारणम्।
शीताम्बुना पिबेद्धीमान् सर्वज्वरनिवृत्तये ॥ ३२ ॥
सुदर्शनं यथा चक्रं दानवानां विनाशनम्।
तद्वज्ज्वराणां सर्वेषामिदं चूर्णं प्रणाशनम् ॥३३॥ सुदर्शनचूर्णम्।
कासश्वासज्वरहरी त्रिफला पिप्पलीयुता।
चूर्णिता मधुना लीढा भेदनी चाग्निबोधिनी ॥ ३४ ॥
कट्फलं मुस्तकं तिक्ता शटी शृङ्गी च पौष्करम्।
चूर्णमेषाञ्च मधुना शृङ्गवेररसेन वा ॥ ३५ ॥
लिहेत् ज्वरहरं कण्ठ्यं कासश्वासारुचीर्जयेत्।
वायुं छर्दिं तथा शूलं क्षयञ्चैव व्यपोहति ॥ ३६ ॥
कट्फलादिचूर्णम्।
शृङ्गी प्रतिविषा कृष्णा चूर्णिता मधुना लिहेत्।
[१] श्वासकासज्वरच्छर्दिशान्त्यै वा केवलां विषाम् ॥ ३७ ॥
शृङ्ग्यादिचूर्णम्।
शुण्ठीप्रतिविषाहिङ्गुमुस्ताकुटजचित्रकैः।
चूर्णमुष्णाम्बुना पीतमामातीसारनाशनम् ॥ ३८ ॥
हरीतकी प्रतिविषा सिन्धुसौवर्चलं वचा।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

हिङ्गु चेतिकृतं चूर्णं पिबेदुष्णेन वारिणा ॥ ३९ ॥
आमातीसारशमनं ग्राहि चाग्निप्रबोधनम्।
मुस्तामिन्द्रयवं विल्वं लोध्रं मोचरसन्तथा ॥ ४० ॥
धातकीं चूर्णयेत्तक्रगुडाभ्यां पाययेत् सुधीः ॥ ४१ ॥
सर्वातीसारशमनं निरुणद्धि प्रवाहिकाम्।
लघु गङ्गाधरं नाम चूर्णं संग्राहकं परम् ॥ ४२ ॥

लघुगङ्गाधरचूर्णम्।

मुस्तारलूकशुण्ठीभिर्धातकीलोध्रबालकैः।
विल्वमोचरसाभ्याञ्च पाठेन्द्रयववत्सकैः ॥ ४२ ॥
आम्रवीजं प्रतिविषा लज्जालुरिति चूर्णकैः।
क्षौद्रतण्डुलपानीयपीतैर्याति प्रवाहिका ॥ ४४ ।
सर्वातीसारग्रहणी प्रशमं याति वेगतः।
वृद्धगङ्गाधरं चूर्णं सरिद्वेगेऽपि बन्धकम् ॥४५॥ वृद्धगङ्गाधरचूर्णम्

तक्रेण यः पिबेन्नित्यं चूर्णं मरिचसम्भवम्।
चित्रसौवर्चलोपेतं ग्रहणी तस्य नश्यति।
उदरप्लीहमन्दाग्निगुल्मार्शोनाशनं भवेत् ॥ ४६ ॥

मरिचाद्यं चूर्णम्।

अष्टौ भागाः कपित्थस्य षड्भागा शर्करा मता।
दाडिमं तिन्तिडीकञ्च श्रीफलं धातकी तथा ॥ ४७ ॥ इमली
अजमोदा च पिप्पल्यः प्रत्येकं स्युस्त्रिभागिकाः।
मरिचं जीरकं धान्यं ग्रन्थिकं बालकन्तथा ॥ ४८ ॥
सौवर्चलं यवानी च चातुर्जातं सचित्रकम्।
नागरञ्चैकभागाः स्युः प्रत्येकं सूक्ष्मचूर्णिताः ॥ ४९ ॥
कपित्थाष्टकसंज्ञं स्याच्चूर्णमेतद्गलामयान्।
अतीसारं क्षयं गुल्मं ग्रहणीञ्च व्यपोहति ॥ ५० ॥

कपित्थाष्टकचूर्णम्।

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

दाड़िमे द्वे पले ग्राह्ये खण्डादष्टपलानि च ।
त्रिगन्धस्य पलं चैकं त्रिकटुश्च पलत्रयम् ॥ ५१ ॥
एतदेकीकृतं सर्वं चूर्णं स्याद्दाड़िमाष्टकम् ।
रुचिकृद्दीपनं सव्यं ग्राहि कासज्वरापहम् ॥५२॥ दाड़िमाष्टकम् ।
दाडिमस्य पलान्यष्टौ शर्करायाः पलाष्टकम् ।
पिप्पली पिप्पलीमूलं यवानी मरिचन्तथा ॥ ५३ ॥
धान्यकं जीरकं शुण्ठी प्रत्येकं पलसम्मिता ।
कर्षमात्रातुगाचीरीत्वक्पत्रैलाश्च केसरम् ॥ ५४ ॥
प्रत्येकं कोलमात्राः स्युस्तच्चूर्णं दाडिमाष्टकम् ।
अतीसारं क्षयं गुल्मं ग्रहणीञ्च गलग्रहम् ।
मन्दाग्निं पीनसं कासं चूर्णमेतद्व्यपोहति ॥ ५५ ॥

वृहद्दाड़िमाष्टकम् ।

लवङ्गं शुद्धकर्पूरमेलात्वङ्नागकेसरम् ।
जातीफलमुशीरञ्च नागरं कृष्णजीरकम् ॥ ५६ ॥
कृष्णागुरुस्तुगाचीरी मांसी नीलोत्पलं कणा ।
चन्दनं तगरं बालं कक्कोलञ्चेति चूर्णयेत् ॥ ५७ ॥
समभागानि सर्वाणि सर्वेभ्योऽर्द्धा सिता भवेत् ।
लवङ्गाद्यमिदं चूर्णं राजार्हं वह्निदीपनम् ॥ ५८ ॥
रोचनं तर्पणं वृष्यं त्रिदोषघ्नं बलप्रदम् ।
हृद्रोगं कण्ठरोगञ्च कासं हिक्काञ्च पीनसम् ॥ ५९ ॥
यक्ष्माणं तमकं श्वासमतीसारमुरःक्षतम् ।
प्रमेहारुचिगुल्मादीन् ग्रहणीमपि नाशयेत् ॥ ६० ॥

लवङ्गाद्यं चूर्णम् ।

जातीफलं लवङ्गैलापत्रत्वङ्नागकेशरम् ।
कर्पूरचन्दनतिलैस्त्वक्क्षीरीतगरामलैः ॥ ६१ ॥
तालीसपिप्पलीपथ्यास्थूलजीरकचित्रकैः ।

शुण्ठीविडङ्गमरिचैः समभागविचूर्णितैः ॥ ६२ ॥
यावन्त्येतानि सर्वाणि कुर्य्याङ्गङ्गाञ्च तावतीम् ।
सर्वचूर्णसमा देया शर्करा च भिषग्वरैः ॥ ६३ ॥
कर्षमात्रं ततः खादेन्मधुना प्लावितं सुधीः ।
अस्य प्रभावाद् ग्रहणीकासश्वासारुचिक्षयाः ।
वातश्लेष्मप्रतिश्यायाः प्रशमं यान्ति वेगतः ॥ ६४ ॥

जातीफलाद्यं चूर्णम् ।

मरिचं नागपुष्पाणि तालीसं लवणानि च । नागकेसर
प्रत्येकमेकभागाः स्युः पिप्पलीमूलचित्रकैः ॥ ६५ ॥
त्वक्क्षातिन्तिडीकञ्च जीरकञ्च द्विभागकम् ।
धान्याम्लवेतसौ विश्वम्भद्रैला बदराणि च ॥ ६६ ॥ लैचीबड़ी
अजमोदा जलधरा प्रत्येकं स्युस्त्रिभागकाः ।
सर्वौषधिचतुर्थांशं दाड़िमस्य फलं भवेत् ॥ ६७ ॥
द्रव्येभ्यो निखिलेभ्यश्च सिता देयार्द्धमात्रया ।
महाखाण्डवसंज्ञः स्याच्चूर्णमेतत्सुरोचनम् ॥ ६८ ॥
अग्निदीप्तिकरं हृद्यं कासातीसारनाशनम् ।
हृद्रोगकण्ठजठरमुखरोगप्रणाशनम् ॥ ६९ ॥
विसूचिकां तथाध्मानमर्शोगुल्मक्रिमीनपि ।
छर्दिं पञ्चविधां श्वासं चूर्णमेतदपोहति ॥ ७० ॥

महाखाण्डवचूर्णम् ।

चित्रकस्त्रिफला व्योषं जीरकं हपुषा वचा ।
यवानी पिप्पलीमूलं शतपुष्पाजगन्धिका ॥ ७१ ॥ वनतुलसी
अजमोदा शटी धान्यं विडङ्गं स्थूलजीरकः ।
हेमाह्वा पौष्करं मूलं क्षारौ लवणपञ्चकम् ॥ ७२ ॥ चोक
कुष्ठञ्चेति समांशानि विशाला स्याद् द्विभागिका । इन्द्रायण की जड़
त्रिवृत् त्रिभागा विज्ञेया दन्त्या भागत्रयं भवेत् ॥७३॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

चतुर्भागा सातला स्यात्सर्वाण्येकत्र चूर्णयेत्।
पाचनस्नेहनाद्यैश्च स्निग्धकोष्ठस्य देहिनः॥ ७४॥
दद्याच्चूर्णं विरेकाय सर्वरोगप्रणाशनम्।
हृद्रोगे पाण्डुरोगे च कासे श्वासे भगन्दरे॥ ७५॥
मन्दाग्नौ च ज्वरे कुष्ठे ग्रहण्याञ्च गलग्रहे।
दद्याद्युक्तानुपानेन तथाध्माने सुरादिभिः॥ ७६॥
गुल्मे वदरनीरेण विड्भङ्गे दधिमस्तुना।
उष्णाम्बुभिरजीर्णे च वृक्षाम्लैः परिकर्तेषु॥ ७७॥
उष्ट्रीदुग्धेनोदरेषु तथा तक्रेण वा गवाम्।
प्रसन्नया वातरोगे दाड़िमाम्भोभिरर्शसि॥ ७८॥
द्विविषे च विषे दद्याद्घृतेन विषनाशनम्।
चूर्णं नारायणं नाम दुष्टरोगगणापहम्॥७९॥ नारायणचूर्णम्।
हपुषा त्रिफला चैव त्रायमाणा च पिप्पली।
हेमक्षीरी त्रिवृच्चैव शातला कटुका वचा॥ ८०॥
नीलिनी सैन्धवं कृष्णा लवणञ्चेति चूर्णयेत्।
उष्णोदकेन मूत्रेण दाड़िमत्रिफलारसैः॥ ८१॥
तथा मांसरसेनापि यथायोग्यं पिबेन्नरः।
अजीर्णे प्लीहगुल्मेषु शोफार्शोविषमाग्निषु।
हलीमकामलापाण्डुकुष्ठाध्मानोदरेष्वपि॥८२॥ हपुषाद्यं चूर्णम्
शुण्ठी हरीतकी कृष्णा त्रिवृत्सौवर्चलन्तथा।
समभागानि सर्वाणि सूक्ष्मचूर्णानि कारयेत्॥ ८३॥
ज्ञेयं पञ्चसमं चूर्णमेतच्छूलहरं परम्।
आध्मानजठरार्शोघ्नमामवातहरं स्मृतम्॥८४॥ शुण्ठ्याद्यं चूर्णम्
कर्षमात्रा भवेत् कृष्णा त्रिवृता स्यात्पलोन्मिता।
खण्डात्पलञ्च विज्ञेयं चूर्णमेकत्र कारयेत्॥ ८५॥
कर्षोन्मितं लिहेदेतत् क्षौद्रेणाध्माननाशनम्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पित्तम्शूलमि नाराचतिना ६७ म
नि पाठान्तरं चक्रदत्तोऽपा

गाढ़विट्कोदरकफान् पित्तं शूलानि नाशयेत् ॥ ८६ ॥

कृष्णाद्यं चूर्णम् ।

लवणत्रितयं क्षारौ शतपुष्पाद्वयं वचा ।
अजमोदाजगन्धा च हपुषा जीरकद्वयम् ॥ ८७ ॥ सौंफ २ नि द्वयम्
मरिचं पिप्पलीमूलं पिप्पली गजपिप्पली ।
हिङ्गुश्च हिङ्गुपत्री च शटी पाठोपकुञ्चिका ॥ ८८ ॥ कलौंजी
शुण्ठी चित्रकचव्यानि विड़ङ्गञ्चाम्लवेतसम् ।
दाड़िमं तिन्तिड़ीकञ्च त्रिवृद्दन्ती शतावरी ॥ ८९ ॥
इन्द्रवारुणिका भार्गी देवदारुर्यवानिका ।
कुस्तुम्बुरु स्तुम्बुरूणि पौष्करं वदराणि च ॥ ९० ॥
शिवा चेति समांशानां चूर्णमेकत्र कारयेत् ।
भावयेदार्द्रकरसैर्वीजपूररसैस्तथा ॥ ९१ ॥
तत्त्रिवेत्सर्पिषा जीर्णमद्येनोष्णोदकेन वा ।
कोलाम्भसा वा तक्रेण दुग्धेनोष्ट्रेण मस्तुना ॥ ९२ ॥
यकृत्प्लीहकटीशूलगुदकुक्षिहृदामयान् ।
अर्शोविष्टम्भमन्दाग्निगुल्मप्लीहोदराणि च ॥ ९३ ॥
हिक्काध्मानश्वासकासान् जयेदेतान्न संशयः ।
एतैरेवौषधैः सम्यक् घृतं वा साधयेत्सुधीः ॥ ९४ ॥ त्रिलवणाद्यं चूर्णम्
तुम्बुरूणि त्रिलवणं यवानी पुष्कराह्वयम् ।
यवक्षाराऽभयाहिङ्गुविड़ङ्गानि समानि च ॥ ९५ ॥
त्रिवृत्त्रिभागा विज्ञेया सूक्ष्मचूर्णानि कारयेत् ।
पिबेदुष्णेन तोयेन यवक्काथेन वा पिबेत् ।
जयेत्सर्वाणि शूलानि गुल्माध्मानोदराणि च ॥ ९६ ॥

तुम्बराद्यं चूर्णम् ।

चित्रको नागरं हिङ्गु पिप्पली पिप्पलीजटा ।
चव्याजमोदमरिचं प्रत्येकं कर्षसम्मितम् ॥ ९७ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

स्वर्जिका च यवक्षारः सिन्धुसौवर्चलं विड़म्।
सामुद्रिकं रोमकञ्च कोलमात्राणि कारयेत्॥ ९८॥
एकीकृत्याखिलं चूर्णं भावयेन्मातुलुङ्गजैः।
रसैर्दाड़िमजैर्वापि शोषयेदातपेन च॥ ९९॥
एतच्चूर्णं जयेद्गुल्मं ग्रहणीमामजां रुजम्।
अग्निञ्च कुरुते दीप्तं रुचिकृत्कफनाशनम्॥ १००॥

चित्रकाद्यं चूर्णम्।

सैन्धवं पिप्पलीमूलं पिप्पली चव्यचित्रकम्।
शुण्ठी हरीतकी चेति क्रमवृद्धानि चूर्णयेत्।
वडवानलनामैतच्चूर्णं स्यादग्निदीपनम्॥१०१॥ वड़वानलचूर्णम्।

अजमोदा विड़ङ्गानि सैन्धवं देवदारु च।
चित्रकं पिप्पलीमूलं शतपुष्पा च पिप्पली॥ १०२॥
मरिचञ्चेति कर्षांशं प्रत्येकं कारयेद् बुधः।
कर्षास्तु पञ्च पथ्याया दश स्युर्वृद्धदारुकात्॥ १०३॥
नागराच्च दशैव स्युः सर्वाण्येकत्र चूर्णयेत्।
पिबेत्कोष्णजलेनैतच्छ्वयथुं नाशयेद् ध्रुवम्॥ १०४॥
आमवातरुजं हन्ति सन्धिपीडां च गृध्रसीम्।
कटिपृष्ठगुदास्थाञ्च जङ्घयोश्च रुजं जयेत्॥ १०५॥
तूणीं प्रतूणीं विश्वाचीं कफवातामयान् जयेत्।
समेन वा गुडेनास्य वटकान् कारयेद् भिषक्॥ १०६॥

अजमोदाद्यं चूर्णम्।

हिङ्गुपाठाभया धान्यं दाडिमं चित्रकः शटी।
अजमोदा त्रिकटुकं हपुषा चाम्लवेतसः॥ १०७॥
अजगन्धा तिन्तिड़ीकं जीरकं पौष्करं वचा।
चव्यं क्षारद्वयं पञ्च लवणानि विचूर्णयेत्॥ १०८॥
प्राग्भोजनस्य मध्ये वा चूर्णमेतत्प्रयोजयेत्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पिबेद्वा जीर्णमद्येन तक्रेणोष्णोदकेन वा ॥ १०९ ॥
गुल्मे वातकफोद्भूते हृद्ग्रहेऽष्ठीलिकासु च।
हृद्वस्तिपार्श्वशूलेषु शूले च गुदयोनिजे ॥ ११० ॥
मूत्रकृच्छ्रे तथानाहे पाण्डुरोगेऽरुचौ तथा।
हिक्कायां यकृति प्लीहश्वासे कासे गलग्रहे ॥ १११ ॥
ग्रहण्यर्शोविकारेषु चूर्णमेतत् प्रशस्यते।
भावितं मातुलुङ्गस्य बहुशः स्वरसेन वा।
कुर्य्याच्च गुटिकां बद्धा वातश्लेष्महरा परा ॥ ११२ ॥

हिङ्ग्वाद्यं चूर्णं।

यवानी दाडिमं शुण्ठी तिन्तिडीकाम्लवेतसौ।
वदराम्लञ्च कुर्वीत चतुःशाणमितानि च ॥ ११३ ॥
सार्द्धं द्विशाणं मरिचं पिप्पली दश शाणिका।
त्वक् सौवर्चलधान्याकजीरकं द्विद्विशाणकम् ॥ ११४ ॥
चतुःषष्टिमितैः शाणैः शर्करामत्र योजयेत्।
चूर्णितं सर्वमेकत्र यवानीखाण्डवाभिधम् ॥ ११५ ॥
चूर्णं जयेत् पाण्डुरोगं हृद्रोगं ग्रहणीं ज्वरम्।
छर्दिशोषातिसारांश्च प्लीहानाहविबन्धताम्।
अरुचिं शूलमन्दाग्निमर्शोजिह्वागलामयान् ॥ ११६ ॥

यवानीखाण्डवं चूर्णम्।

तालीसं मरिचं शुण्ठी पिप्पली वंशरोचनम्।
एकद्वित्रिचतुःपञ्चकर्षैर्भागान् प्रकल्पयेत् ॥ ११७ ॥
एलात्वचोस्तु कर्षार्द्धं प्रत्येकं भागमाचरेत्।
द्वात्रिंशत्कर्षतुलिता प्रदेया शर्करा बुधैः ॥ ११८ ॥
तालीसाद्यमिदं चूर्णं रोचनं पाचनं स्मृतम्।
कासश्वासज्वरहरं सर्वातीसारनाशनम् ॥ ११९ ॥
शोषाध्मानहरं प्लीहग्रहणीपाण्डुरोगजित्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पक्वा वा शर्करां चूर्णं क्षिपेत्स्याद् गुटिका ततः॥ १२०॥

सितोपला/मिश्री

तालीसाद्यमोदकश्चचूर्णम्।

सितोपला षोडश स्यादष्टौ स्याद्वंशरोचनः।
पिप्पली स्याच्चतुःकर्षा स्यादेला च द्विकर्षिका॥ १२१॥
एकः कर्षस्त्वचः कार्य्यश्चूर्णयेत्सर्वमेकतः।
सितोपलादिकं चूर्णं मधुसर्पिर्युतं लिहेत्॥ १२२॥
श्वासकासज्वरहरं हस्तपादाङ्गदाहजित्।
मन्दाग्निं सुप्तजिह्वत्वं पार्श्वशूलमरोचकम्।
ज्वरमूर्द्धगतं रक्तं पित्तमाशु व्यपोहति॥ १२३॥

सितोपलादिचूर्णम्।

सामुद्रलवणं कार्य्यमष्टकर्षमितं बुधैः।
पञ्च सौवर्चलं ग्राह्यं विडसैन्धवधान्यकम्॥ १२४॥
पिप्पली पिप्पलीमूलं कृष्णजीरकपत्रकम्।
नागकेशरतालीसमम्लवेतसकन्तथा॥ १२५॥
द्विकर्षमात्राण्येतानि प्रत्येकं कारयेद् बुधः।
मरिचं जीरकं विश्वमेकैकं कर्षमात्रकम्॥ १२६॥
दाड़िमं स्याच्चतुःकर्षं त्वगेले चार्द्धकर्षके।
एतच्चूर्णीकृतं सर्वं लवणं भास्कराभिधम्॥ १२७॥
शाणप्रमाणं देयन्तु मस्तुतक्रसुरासवैः।
वातश्लेष्मभवं गुल्मं प्लीहानमुदरञ्चयम्॥ १२८॥
अर्शांसि ग्रहणीं कुष्ठं विबन्धं च भगन्दरम्।
शोफं शूलं श्वासकासावामवातञ्च हृद्रुजम्॥ १२९॥
मन्दाग्निं नाशयेत्येव दीपनं पाचनं परम्।
सर्वलोकहितार्थाय भास्करेणोदितं पुरा॥ १३०॥

भास्करलवणचूर्णम्।

एलाप्रियङ्गुमुस्तानि कोलमज्जा च पिप्पली।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

श्रीचन्दनं तथा लाजा लवङ्गं नागकेशरम् ॥ १३१ ॥
एतच्चूर्णीकृतं सर्वं सिताक्षौद्रयुतं लिहेत् ।
वातपित्तकफोद्भूतं छर्दिं हन्त्यतिवेगतः ॥१३२॥ एलादिचूर्णम् ।
मूलं पत्रं फलं पुष्पं त्वचं निम्बात्समाहरेत् ।
सूक्ष्मचूर्णमिदं कुर्य्यात्पलं पञ्चदशोन्मितम् ॥ १३३ ॥
लोहभस्महरीतक्यौ चक्रमर्दक-चित्रकौ ।
भल्लातकं विडङ्गानि शर्करामलकं निशा ॥ १३४ ॥
पिप्पली मरिचं शुण्ठी वाकुचीकृतमालकः ।
गोक्षुरश्च पलोन्मानमेकैकं कारयेद् बुधः ॥ १३५ ॥
सर्वमेकीकृतं चूर्णं भृङ्गराजेन भावयेत् ।
अष्टभागावशिष्टेन खदिरासनवारिणा ॥ १३६ ॥
भावयित्वा च संशुष्कं कर्षमात्रं ततः पिबेत् ।
खदिरासनतोयेन सर्पिषा पयसा च वा ॥ १३७ ॥
मासेन सर्वकुष्ठानि विनिहन्ति रसायनम् ।
पञ्चनिम्बमिदं चूर्णं सर्वरोगप्रणाशनम् ॥१३८॥ पञ्चनिम्बचूर्णम्
शतावरी गोक्षुरश्च वीजञ्च कपिकच्छुजम् ।
गाङ्गेरुकी चातिवला वीजमिक्षुरसोद्भवम् ॥ १३९ ॥
चूर्णितं सर्वमेकत्र गोदुग्धेन पिबेन्निशि ।
न तृप्तिं याति नारीभिर्नरश्चूर्णप्रभावतः ॥१४०॥ पुष्टिकरं चूर्णम्
अश्वगन्धा दशपला तन्मात्रो वृद्धदारकः ।
चूर्णीकृत्योभयं विद्वान् घृतभाण्डे निधापयेत् ॥ १४१ ॥
कर्षैकं पयसा पीत्वा नारीभिर्नैव तृप्यति ।
अगत्वा प्रमदां भूयाद्वली पलितवर्जितः ॥ १४२ ॥

अश्वगन्धादिचूर्णम् ।

चित्रकस्त्रिफला मुस्तं विडङ्गं त्र्यूषणानि च ।
समभागानि कार्य्याणि नवभागं हतायसः ॥ १४३ ॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

एतदेकीकृतं चूर्णं मधुसर्पिर्युतं लिहेत् ।
गोमूत्रमथवा तक्रमनुपाने प्रशस्यते ॥ १४४ ॥
पाण्डुरोगं जयत्युग्रं हृद्रोगञ्च भगन्दरम् ।
शोथकुष्ठोदरार्शांसि मन्दाग्निमरुचिं क्रमीन्॥१४५॥नवायसं चूर्णम्
आकारकरभः शुण्ठी कक्कोलं कुङ्कुमं कणा ।
जातीफलं लवङ्गञ्च चन्दनञ्चेति कार्षकान् ॥ १४६ ॥
चूर्णानिमांस्ततः कुर्य्यादहिफेनं पलोन्मितम् ।
सर्वमेकीकृतं चूर्णं माषैकं मधुना लिहेत् ॥ १४७ ॥
शुक्रस्तम्भकरं चूर्णं पुंसामानन्दकारकम् ।
नारीणां प्रीतिजननं सेवेत निशि कामुकः ॥ १४८ ॥
आकारकरभादिः ।

---

अथ सप्तमोऽध्यायः ।

वटकाश्चाथ कथ्यन्ते तन्नाम गुटिका वटी ।
मोदको वटिका पिण्डी गुड़ो वर्त्तिस्तथोच्यते ॥ १ ॥
लेहवत्साध्यते वह्नौ गुड़ो वा शर्करायथवा ।
गुग्गुलुर्वा क्षिपेत्तत्र चूर्णं तन्निर्मिता वटी ॥ २ ॥
कुर्य्यादवह्निसिद्धेन क्वचिद् गुग्गुलुना वटीम् ।
द्रवेण मधुना वापि गुटिकां कारयेद् बुधः ॥ ३ ॥
सिता चतुर्गुणा देया वटीषु द्विगुणो गुड़ः ।
चूर्णाच्चूर्णसमः कार्य्यो गुग्गुलुर्मधु तत्समम् ॥ ४ ॥
द्रवञ्च द्विगुणं देयं मोदकेषु भिषग्वरैः ।
कर्षप्रमाणा तन्मात्रा बलं दृष्ट्वा प्रयुज्यते ॥ ५ ॥
इन्द्रवारुणिका मुस्तं शुण्ठी दन्ती हरितकी ।
त्रिवृत्सटीविडङ्गानि गोक्षुरश्चित्रकस्तथा ॥ ६ ॥
तेजोह्वा च द्विकर्षाणि पृथक् द्रव्याणि कारयेत् ।

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

शूरणस्य पलान्यष्टौ वृद्धदारु चतुष्पलम् ॥ ७ ॥
चतुःपलं स्यात् भल्लातं क्वाथयेत्सर्वमेकतः।
जलद्रोणे चतुर्थांशं गृह्णीयात् क्वाथमुत्तमम् ॥ ८ ॥
क्वाथ्यद्रव्यात्त्रिगुणितं गुडं क्षिप्त्वा पुनः पचेत्।
सम्यक् पक्वञ्च तं ज्ञात्वा चूर्णान्येतानि दापयेत् ॥ ९ ॥
चित्रकत्रिवृतादन्तीतेजोह्वाः पलिकाः पृथक्।
पृथक् त्रिपलिकाः कार्य्या व्योषैलामरिचत्वचः ॥ १० ॥
निक्षिपेन्मधुशीते च तस्मिन् प्रस्थप्रमाणितम्।
एवं सिद्धो भवेच्छ्रीमान् बाहुशालगुडः शुभः ॥ ११ ॥
जयेदर्शांसि सर्वाणि गुल्मं वातोदरन्तथा।
आमवातप्रतिश्यायग्रहणीक्षयपीनसान्।
हलीमकं पाण्डुरोगं प्रमेहञ्च रसायनम् ॥ १२ ॥

श्रीबाहुशालगुडः।

मरिचं कर्षमात्रं स्यात् पिप्पली कर्षसम्मिता।
अर्द्धकर्षो यवक्षारः कर्षयुग्मञ्च दाडिमम् ॥ १३ ॥
एतच्चूर्णीकृतं युञ्ज्यादष्टकर्षगुडेन हि।
शाणप्रमाणां गुटिकां कृत्वा वक्त्रेऽवधारयेत्।
अस्याः प्रभावात् सर्वेऽपि कासा यान्त्येव संक्षयम् ॥ १४ ॥
गुडशुण्ठीशिवामुस्तैर्धारयेद्गुटिकां मुखे।
श्वासकासेषु सर्वेषु बिभीतञ्चापि केवलम् ॥१५॥ गुडादिगुटिका।
आमलं कमलं कुष्ठं लाजाश्च वटरोहकम्।
एतच्चूर्णस्य मधुना गुटिकां धारयेन्मुखे।
तृष्णां प्रवृद्धां हन्त्येषा मुखशोषञ्च दारुणम् ॥ १६ ॥

आमलक्यादिगुटिका।

विड़ङ्गं नागरं कृष्णा पथ्यामलविभीतकौ।
वचा गुडूची भल्लातं सद्विषं चात्र योजयेत् ॥ १७ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

एतानि समभागानि गोमूत्रेणैव पेषयेत्।
गुञ्जाभा गुटिका कार्य्या दद्यादार्द्रकजे रसैः ॥ १८ ॥
एकामजीर्णयुक्तस्य द्वे विसूच्यां च दापयेत्।
तिस्रश्च सर्पदष्टस्य चतस्रः सन्निपातिके।
गुटिका जीवनीनाम्नी सञ्जीवयति मानवम् ॥ १९ ॥

सञ्जीवनी गुटिका।

व्योषाम्लवेतसं चव्यं तालीसं चित्रकन्तथा।
जीरकं तिन्तिड़ीकञ्च प्रत्येकं कर्षभागिकम् ॥ २० ॥
त्रिसुगन्धं त्रिशाणं स्याद्गुड़ः स्यात्कर्षविंशतिः।
व्योषादिगुटिका सेयं पीनसश्वासकासजित्।
रुचिस्वरकराख्याता प्रतिश्यायप्रणाशिनी ॥ २१ ॥

व्योषादिगुटिका।

आमेषु सगुड़ां शुण्ठीमजीर्णे गुड़पिप्पलीम्।
कृच्छ्रे जीरगुड़ं दद्यादर्शःसु सगुड़ाभयाम् ॥ २२ ॥

आमाद्यजीर्णादौ गुटिकाचतुष्टयमाह।

वृद्धदारकभल्लातशुण्ठीचूर्णेन योजितः।
मोदकः सगुड़ो हन्यात् षड्विधार्शःकृतं रुजम् ॥ २३ ॥

वृद्धदारकमोदकः।

शुष्कसूरणचूर्णस्य भागान् द्वात्रिंशदाहरेत्।
भागान् षोड़शचित्रकस्य शुण्ठ्या भागचतुष्टयम् ॥ २४ ॥
द्वौ भागौ मरिचस्यापि सर्वाण्येकत्र चूर्णयेत्।
गुडेन पिण्डिकां कुर्य्यादर्शसां नाशनं परम् ॥ २५ ॥ सूरणपिण्डी।
सूरणो वृद्धदारश्च भागैः षोड़शभिः पृथक्।
मुशलीचित्रकौ ज्ञेयावष्टभागमितौ पृथक् ॥ २६ ॥
शिवा विभीतकी धात्री विड़ङ्गं नागरं कणा।
भल्लातः पिप्पलीमूलं तालीसञ्च पृथक् पृथक् ॥ २७ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

चतुर्भागप्रमाणानि त्वगेला मरिचन्तथा ।
द्विभागमात्राणि पृथक् ततस्त्वेकत्र चूर्णयेत् ॥ २८ ॥
द्विगुणेन गुडेनाथ वटकान् कारयेद् बुधः ।
प्रबलाग्निकरा एते तथार्शोनाशनाः पराः ॥ २९ ॥
ग्रहणीं वातकफजां श्वासं कासं क्षयामयम् ।
प्लीहानं श्लीपदं शोथं हिक्कां मेहं भगन्दरम् ।
निहन्ति पलितं क्षुधा तथा मेध्या रसायनी ॥ ३० ॥

सूरणवटकः ।

त्रिफला त्र्यूषणं चव्यं पिप्पलीमूलचित्रकौ ।
दारु माक्षिकधातुस्त्वक् दार्वी मुस्तं विडङ्गकम् ॥ ३१ ॥
प्रत्येकं कर्षमात्राणि सर्वं द्विगुणितं तदा ।
मण्डूरं चूर्णयेच्छुद्धं गोमूत्रेऽष्टगुणे क्षिपेत् ॥ ३२ ॥
पक्त्वा च वटकान् कृत्वा दद्यात्तत्रानुपानतः ।
कामलापाण्डुमेहार्शःशोथकुष्ठकफामयान् ।
ऊरुस्तम्भमजीर्णञ्च प्लीहानं नाशयन्ति च ॥३३॥ मण्डूरवटकः ।

चन्द्रप्रभा वचा मुस्ता भूनिम्बाऽमरदारुकम् ।
हरिद्राऽतिविषा दार्वी पिप्पलीमूलचित्रकम् ॥ ३४ ॥
धान्यकं त्रिफला चव्यं विडङ्गं गजपिप्पली ।
व्योषं माक्षिकधातुश्च द्वौ क्षारौ लवणत्रयम् ॥ ३५ ॥
एतानि शाणमात्राणि प्रत्येकं कारयेद् बुधः ।
त्रिवृद्दन्तीपत्रकं च त्वगेला वंशलोचना ॥ ३६ ॥
प्रत्येकं कर्षमात्राणि कुर्य्यादेतानि बुद्धिमान् ।
द्विकर्षं हतलोहं स्यात् चतुष्कर्षा सिता भवेत् ॥ ३७ ॥
शिलाजत्वष्टकर्षं स्यादष्टौ कर्षाश्च गुग्गुलोः ।
एभिरेकत्र संचूर्णैः कर्त्तव्या गुटिका शुभा ॥ ३८ ॥
चन्द्रप्रभेति विख्याता सर्वरोगप्रणाशिनी ।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

प्रमेहं विंशतिं कृच्छ्रं मूत्राघातं तथाश्मरीम्॥ ३९॥
विबन्धानाहशूलानि मेहनं ग्रन्थिमर्बुदम्।
अन्त्रवृद्धिं तथा पाण्डुं कामलाञ्च हलीमकम्॥ ४०॥
अण्डवृद्धिं कटीशूलं श्वासं कासं विचर्चिकाम्।
कुष्ठान्यर्शांसि कण्डुञ्च प्लीहोदरभगन्दरम्॥ ४१॥
दन्तरोगं नेत्ररोगं स्त्रीणामार्त्तवजां रुजम्।
पुंसां शुक्रगतान् रोगान्मन्दाग्निमरुचिन्तथा॥ ४२॥
वातपित्तकफं हन्याद्बल्या वृष्या रसायनी।
चन्द्रप्रभायां कर्षस्तु चतुःशाणं विधीयते॥ ४३॥

चन्द्रप्रभादिगुटिका।

यवानी जीरकं धान्यं मरिचं गिरिकर्णिका। विष्णुकान्ता
अजमोदोपकुञ्ची च चतुःशाणा पृथक् पृथक्॥ ४४॥ कलौंजी
हिङ्गु षट् शाणिकं कार्य्यं चारौ लवणपञ्चकम्।
त्रिवृच्चाष्टमितैः शाणैः प्रत्येकं कल्पयेत् सुधीः॥ ४५॥
दन्ती शटी पौष्करञ्च विड़ङ्गं दाड़िमं शिवा।
चित्रोऽम्लवेतसः शुण्ठी शाणैः षोडशभिः पृथक्॥ ४६॥
बीजपूररसेनैषां गुटिकां कारयेद् बुधः।
घृतेन पयसा मद्यैरम्लैरुष्णोदकेन वा॥ ४७॥
पिबेत् काङ्कायनप्रोक्तां गुटिकां गुल्मनाशिनीम्।
मद्येन वातिकं गुल्मं गोक्षीरेण च पैत्तिकम्॥ ४८॥
मूत्रेण कफगुल्मञ्च दशमूलैस्त्रिदोषजम्।
उष्ट्रीदुग्धेन नारीणां रक्तगुल्मं निवारयेत्।
हृद्रोगं ग्रहणीं शूलं क्रिमीनर्शांसि नाशयेत्॥ ४९॥

काङ्कायनगुटिका।

नागरं पिप्पलीमूलं पिप्पली-चव्यचित्रकौ।
भृष्टं हिङ्ग्वजमोदा च सर्षपा जीरकद्वयम्॥ ५०॥

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

रेणुकेन्द्रयवा पाठा विडङ्गं गजपिप्पली ।
कटुकातिविषा भार्गी वचा मूर्वेति भागतः ॥ ५१ ॥
प्रत्येकं शाणिकानि स्युर्द्रव्याणीमानि विंशतिः ।
द्रव्येभ्यः सकलेभ्यश्च त्रिफला त्रिगुणा भवेत् ॥ ५२ ॥
एभिश्चूर्णीकृतैः सर्वैः समो देयश्च गुग्गुलुः ।
वङ्गं रौप्यं च नागञ्च लोहसारस्तथाभ्रकम् ॥ ५३ ॥
मण्डूरं रससिन्दूरं प्रत्येकं पलसम्मितम् ।
गुड़पाकसमं कृत्वा इमं दद्याद्यथोचितम् ॥ ५४ ॥
एकपिण्डं ततः कृत्वा धारयेद् घृतभाजने ।
गुटिका शाणमात्रा तु कृत्वा ग्राह्या यथोचिता ॥ ५५ ॥
गुग्गुलुर्योगराजोऽयन्त्रिदोषघ्नो रसायनः ।
मैथुनाहारपानानां त्यागो नैवात्र विद्यते ॥ ५६ ॥
सर्वान् वातमयान् कुष्ठानर्शांसि ग्रहणीगदम् ।
प्रमेहं वातरक्तञ्च नाभिशूलं भगन्दरम् ॥ ५७ ॥
उदावर्त्तं चयं गुल्ममपस्मारमुरोग्रहम् ।
मन्दाग्निं श्वासकासञ्च नाशयेदरुचिन्तथा ॥ ५८ ॥
रेतोदोषहरः पुंसां रजोदोषहरः स्त्रियाम् ।
पुंसामपत्यजनको बन्ध्यानां गर्भदस्तथा ॥ ५९ ॥
रास्नादिक्वाथसंयुक्तो विविधं हन्ति मारुतम् ।
काकोल्यादिसृतात् पित्तं कफमारग्वधादिना ॥ ६० ॥
दार्वीसृतेन मेहांश्च गोमूत्रेण च पाण्डुताम् ।
मेदोवृद्धिञ्च मधुना कुष्ठं निम्बसृतेन च ॥ ६१ ॥
छिन्नाक्काथेन वातास्रं शोथं मूर्लककजातिसृतात् ।
पाटलाक्काथसहितो विषं मूषकजं जयेत् ॥ ६२ ॥
त्रिफलाक्काथसहितो नेत्रार्त्तिं हन्ति दारुणाम् ।
पुनर्नवादिक्काथेन हन्यात्सर्वोदराण्यपि ॥ ६३ ॥ योगराजगुग्गुलुः ।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

त्रिफलायास्त्रयः प्रस्थाः प्रस्थैकममृता भवेत्।
संचूर्ण्य लोहपात्रेण सार्द्धद्रोणाम्बुना पचेत्॥ ६४॥
जलमर्द्धं शृतं ज्ञात्वा गृह्णीयाद्वस्त्रगालितम्।
ततः क्वाथे क्षिपेच्छुद्धं गुग्गुलुं प्रस्थसम्मितम्॥ ६५॥
पुनः पचेदयःपात्रे दर्व्या सङ्घर्षयेन्मुहुः।
सान्द्रीभूतं च तं ज्ञात्वा गुड़पाकसमाकृतिम्॥ ६६॥
चूर्णीकृत्य ततस्तत्र द्रव्याणीमानि निक्षिपेत्।
त्रिफला द्विपला ज्ञेया गुडूची पलिका मता॥ ६७॥
षडक्षं त्रूषणं प्रोक्तं विडङ्गानां पलार्द्धकम्।
दन्ती कर्षमिता कार्य्या त्रिवृत्कर्षमिता स्मृता॥ ६८॥
ततः पिण्डीकृतं सर्वं घृतपात्रे विनिक्षिपेत्।
गुटिकां शाणमात्रेण युञ्ज्याद्दोषाद्यपेक्षया॥ ६९॥
अनुपाने भिषग् दद्यात् कोष्णं नीरं पयोऽथवा।
मञ्जिष्ठादिशृतं वापि युक्तियुक्तं ततः परम्॥ ७०॥
जयेत्सर्वाणि कुष्ठानि वातरक्तं त्रिदोषजम्।
सर्वव्रणानि गुल्मांश्च प्रमेहपिडकास्तथा॥ ७१॥
प्रमेहोदरमन्दाग्निं कासं श्वयथुपाण्डुताम्।
निहन्ति चामयान् सर्वान् उपयुक्तो रसायनः॥ ७२॥
कैशोरिकाभिधानोऽयं गुग्गुलुः कान्तिकारकः।
वासादिना नेत्रगदान् गुल्मादीन् वरुणादिना॥ ७३॥
क्वाथेन खदिरस्यापि व्रणकुष्ठानि नाशयेत्।
अम्लं तीक्ष्णमजीर्णञ्च व्यायामं श्रममातपम्।
मद्यं रोषं त्यजेत्सम्यग् गुणार्थी पुरसेवकः॥७४॥ कैशोरगुग्गुलुः।
त्रिपलं त्रिफलाचूर्णं कृष्णाचूर्णं पलोन्मितम्।
गुग्गुलुं पञ्चपलिकं चोदयेत् सर्वमेकतः॥ ७५॥
ततस्तु गुटिकां कृत्वा प्रयुञ्ज्याद्वह्निअपेक्षया।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

भगन्दरं गुल्मशोथार्शांसि च विनाशयेत्॥७६॥ त्रिफलागुग्गुलुः

अष्टाविंशतिसंख्यानि पलान्यानीय गोक्षुरोः ।
विपचेत् षड्गुणे नीरे क्वाथो ग्राह्योऽर्द्धशेषतः ॥ ७७ ॥
ततः पुनः पचेत्तत्र पुरं सप्तपलं क्षिपेत् ।
गुड़पाकसमाकारं ज्ञात्वा तं तत्र निक्षिपेत् ॥ ७८ ॥
त्रिकटु त्रिफला मुस्तं चूर्णितं पलसप्तकम् ।
ततः पिण्डीकृतस्यास्य गुटिका मुखयोजिता ॥ ७९ ॥
हन्यात् प्रमेहं कृच्छ्रञ्च प्रदरं मूत्रघातकम् ।
वातास्रं वातरोगांश्च शुक्रदोषं तथाश्मरीम् ॥ ८० ॥

गोक्षुरादिगुग्गुलुः ।

त्रिफलाष्टपलं काथ्यं भल्लातञ्च चतुष्पलम् ।
वाकुची पञ्च पलिका विड़ङ्गानां चतुःपलम् ॥ ८१ ॥
हतं लौहं त्रिवृच्चैव गुग्गुलुश्च शिलाजतु ।
एकैकं पलमात्रं स्यात्पलार्द्धं पौष्करं भवेत् ॥ ८२ ॥
चित्रकस्य पलार्द्धं स्याद् द्विशाणं मरिचं भवेत् ।
नागरं पिप्पली मुस्तं त्वगेलापत्रकुङ्कमम् ॥ ८३ ॥
शाणोन्मितं स्यादेकैकं चूर्णयेत्सर्वमेकतः ।
ततस्तत्प्रक्षिपेच्चूर्णं पक्वखण्डे च तत्समे ॥ ८४ ॥
मोदकान् पलिकान् कृत्वा प्रयुञ्जीत यथोचितम् ।
हन्यात् सर्वाणि कुष्ठानि त्रिदोषप्रभवामयान् ॥ ८५ ॥
भगन्दरप्लीहगुल्मान् जिह्वातालुगलामयान् ।
शिरोऽक्षिप्रगतान् रोगानन्यान् पृष्ठगदानपि ॥ ८६ ॥
प्राग्भोजनस्य देयं स्यादधःकायस्थिते गदे ।
भेषजं भक्तमध्ये च रोगे जठरसंस्थिते ।
भोजनस्योपरि ग्राह्यमूर्द्ध्वजत्रुगदेषु च ॥८७॥ त्रिफलामोदकः ।
काञ्चनारत्वचो ग्राह्यं पलविंशतिकं बुधैः ।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

त्रिकटु द्वादशपलं त्रिफला षट्पला भवेत् ॥ ८८ ॥
पलैको वरुणः कार्य्य एलात्वक्पत्रजन्तथा ।
एकैकं कर्षमात्रं स्यात्सर्वाण्येकत्र चूर्णयेत् ॥ ८९ ॥
यावच्चूर्णमिदं सर्वं तावन्मात्रस्तु गुग्गुलुः ।
सङ्कुट्य सर्वमेकत्र पिण्डं कृत्वा च धारयेत् ॥ ९० ॥
गुटिकाः शाणिकाः कृत्वा प्रातर्ग्राह्या यथोचिता ।
गण्डमालां जयत्युग्रामपचीमर्वुदानि च ॥ ९१ ॥
ग्रन्थीन् व्रणानि गुल्मांश्च कुष्ठानि च भगन्दरम् ।
प्रदेयश्चानुपानार्थं क्वाथो मुण्डितिकाभवः ।
क्वाथः खदिरसारस्य पथ्याक्वाथोऽथ चोष्णकम् ॥ ९२ ॥

काञ्चनारगुग्गुलुः ।

निस्तुषं माषचूर्णं स्यात्तथा गोधूमसम्भवम् ।
निस्तुषं यवचूर्णञ्च शालितण्डुलकन्तथा ॥ ९३ ॥
सूक्ष्मञ्च पिप्पलीचूर्णं पलिकान्युपकल्पयेत् ।
एतदेकीकृतं सर्वं भर्जयेद्गोघृतेन च ॥ ९४ ॥
अर्द्धमात्रेण सर्वेभ्यस्ततः खण्डसमं क्षिपेत् ।
जलञ्च द्विगुणं दत्त्वा पाचयेत्तं शनैः शनैः ॥ ९५ ॥
ततः पक्वं समुद्धृत्य कृत्वा कुर्वीत मोदकान् ।
भुक्त्वा सायं पलैकञ्च पिबेत् क्षीरं चतुर्गुणम् ॥ ९६ ॥
वर्जनीयौ विशेषेण क्षाराम्लौ द्वौ रसावपि ।
कृत्वैवं रमयेन्नारीं बह्वीं न क्षीयते नरः ॥९७॥ माषादिमोदकः

---

## अथ अष्टमोऽध्यायः ।

क्वाथस्य स्यात्पुनः पाकाद्घनत्वं सा रसक्रिया ।
सोऽवलेहश्च लेहः स्यात्तन्मात्रा स्यात् पलोन्मिता ॥ १ ॥
सिता चतुर्गुणा कार्य्या चूर्णाच्च द्विगुणो गुडः ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

द्रवं चतुर्गुणं दद्यादिति सर्वत्र निश्चयः ॥ २ ॥
सुपक्वे तन्तुमत्त्वं स्यादवलेहेषु मज्जनम् ।
खरत्वं पीडितो मुद्रागन्धवर्णरसोद्भवः ॥ ३ ॥
दुग्धमिक्षुरसं यूषं पञ्चमूलकषायजम् ।
वासाक्वाथं यथायोग्यमनुपानं प्रशस्यते ॥ ४ ॥
कण्टकारीतुला नीरे द्रोणे पक्त्वा कषायकम् ।
पादशेषं गृहीत्वा च तस्मिंश्चूर्णानि दापयेत् ॥ ५ ॥
पृथक् पलांशान्येतानि गुडूचीचव्यचित्रकाः ।
मुस्तं कर्कटशृङ्गी च त्र्यूषणं धन्वयासकः ॥ ६ ॥
भार्गी रास्ना शटी चैव शर्करा पलविंशतिः ।
प्रत्येकञ्च पलान्यष्टौ प्रदद्याद् घृततैलयोः ॥ ७ ॥
पक्त्वा लेहत्वमानीय शीते मधुपलाष्टकम् ।
चतुष्पलं तुगाक्षीरं पिप्पलीनां चतुष्पलम् ॥ ८ ॥
क्षिप्त्वा निदध्यात् सुदृढे मृण्मये भाजने शुभे ।
लेहोऽयं हन्ति हिक्कार्त्तिश्वासकासानशेषतः ॥ ९ ॥

कण्टकार्य्यवलेहः ।

पाटलाऽरणिकाश्मर्य्यो विल्वारलुकगोक्षुराः ।
पर्ण्यौ बृहत्यौ पिप्पल्यः शृङ्गी द्राक्षामृताभया ॥ १० ॥
बलाभूम्यामलीवासा ऋद्धी जीवन्तिका शटी ।
जीवकर्षभकौ मुस्तं पौष्करं काकनासिका ॥ ११ ॥
मुद्गपर्णी माषपर्णी विदारी च पुनर्नवा ।
काकोल्यौ कमलं मेदे सूक्ष्मैलागुरुचन्दनम् ॥ १२ ॥
एकैकं पलसम्मानं स्थूलचूर्णितमौषधम् ।
एकीकृत्य महत्पात्रे पञ्चामलशतानि च ॥ १३ ॥
पचेद् द्रोणजलं क्षिप्त्वा ग्राह्यमष्टावशेषितम् ।
ततस्तु तान्यमलानि निष्कुलीकृत्य वाससा ॥ १४ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

दृढ़हस्तेन संपीड्य क्षिप्वा तत्र ततो घृतम्।
पलसप्तमितं तानि किञ्चिद् भृष्टान्यवह्निना ॥ १५ ॥
ततस्तत्र क्षिपेत् क्वाथं खण्डञ्चार्द्धपलोन्मितम्।
लेहवत्साधयित्वा च चूर्णानीमानि दापयेत् ॥ १६ ॥
पिप्पली द्विपला देया तुगाक्षीरी चतुष्पला।
प्रत्येकं च त्रिशाणं स्यात्त्वगेलापत्रकेशरम् ॥ १७ ॥
ततस्त्वे कीकृते तस्मिन् क्षिपेत् क्षौद्रञ्च षट्पलम्।
इत्येतच्च्यवनप्रोक्तं च्यवनप्राशसंज्ञितम् ॥ १८ ॥
लेह्यं वह्निबलं दृष्ट्वा खादेत् क्षीणो रसायनम्।
बालवृद्धाः क्षतक्षीणा नारीक्षीणाश्च शोषिणः ॥ १९ ॥
हृद्रोगिणः स्वरक्षीणाः ये नरास्तेषु युज्यते।
कासं श्वासं पिपासाञ्च वातास्रमुरसो ग्रहम् ॥ २० ॥
वातपित्तं शुक्रदोषं मूत्रदोषञ्च नाशयेत्।
मेधां स्मृतिं स्त्रीषु हर्षं कान्तिं वर्णप्रसन्नताम्।
अस्योपयोगादाप्नोति नरो जीर्णविवर्जितः ॥ २१ ॥

च्यवनप्राशावलेहः।

निष्कुलीकृत्य कुष्माण्ड-खण्डशः पलशतं पचेत्।
निक्षिप्य द्विगुणं नीरं अर्द्धशिष्टञ्च गृह्यते ॥ २२ ॥
तानि कुष्माण्डखण्डानि पीडयेद् दृढवाससा।
आतपे शोषयेत्किञ्चिच्छूलाग्रैर्बहुशो व्यधेत् ॥ २३ ॥
क्षिप्त्वा ताम्रकटाहे च दद्यादष्टपलं घृतम्।
तेन किञ्चिद्भर्जयित्वा पूर्वोक्तञ्च जलं क्षिपेत् ॥ २४ ॥
खण्डात्पलशतं दत्त्वा सर्वमेकत्र पाचयेत्।
सुपक्वे पिप्पली शुण्ठी जीराणां द्वे पले पृथक् ॥ २५ ॥
पृथक् पलार्द्धं धान्याकं पत्रैला मरिचं त्वचम्।
चूर्णीकृत्य क्षिपेत्तत्र घृतार्द्धं क्षौद्रमावपेत् ॥ २६ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

खादेदग्निबलं दृष्ट्वा रक्तपित्ती ज्वरी क्षयी।
शोषतृष्णाभ्रमच्छर्दिश्वासकासक्षतातुरः॥ २७॥
कुष्माण्डकावलेहोऽयं बालवृद्धेषु युज्यते।
उरःसन्धानकृद् वृष्यो बृंहणो बलकृन्मतः॥ २८॥

कुष्माण्डकावलेहः।

युक्त्या कुष्माण्डखण्डस्य सूरणं विपचेत् सुधीः।
अर्शसां मूढ़वातानां मन्दाग्नीनाञ्च युज्यते॥ २९॥

खण्डसूरणावलेहः।

हरीतकी शतं भद्रं यवानामाढकन्तथा।
पलानि दशमूलस्य विंशतिञ्च नियोजयेत्॥ ३०॥
चित्रकः पिप्पलीमूलमपामार्गः शटी तथा।
कपिकच्छुः शङ्खपुष्पी भार्गी च गजपिप्पली॥ ३१॥
बलापुष्करमूलञ्च पृथग्द्विपलमात्रया।
पचेत् पञ्चाढके नीरे यवैः स्विन्नैः श्रृतं नयेत्॥ ३२॥
तत्राभयाशतं दद्यात् क्वाथे तस्मिन् विचक्षणः।
सर्पिस्तैलाष्टपलकं क्षिपेद् गुडतुलान्तथा॥ ३३॥
पक्वा लेहत्वमानीय सिद्धं शीते पृथक् पृथक्।
क्षौद्रञ्च पिप्पलीचूर्णं दद्यात् कुडवमात्रया॥ ३४॥
हरीतकीद्वयं खादेत्तेन लेहेन नित्यशः।
क्षयं कासं ज्वरं श्वासं हिक्कार्शोऽरुचिपीनसान्॥ ३५॥
ग्रहणीं नाशयेदेष बलीपलितनाशनः।
बलवर्णकरः पुंसामवलेहो रसायनः।
विहितोऽगस्त्यमुनिना सर्वरोगप्रणाशनः॥ ३६॥

अगस्त्यहरीतकी।

कुटजत्वक्तुलां द्रोणे जलस्य विपचेत् सुधीः।
कषायं पादशेषञ्च गृह्णीय द्वस्त्रगालितम्॥ ३७॥

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

त्रिंशत्पलं कुडवस्यात्र दत्त्वा च विपचेत् पुनः ।
सान्द्रत्वमागतं दृष्ट्वा चूर्णानीमानि दापयेत् ॥ ३८ ॥
रसाञ्जनं मोचरसं त्रिकटु त्रिफला तथा ।
लज्जालु चित्रकं पाठा विल्वमिन्द्रयवं वचा ॥ ३९ ॥
भल्लातकं प्रतिविषं विडङ्गानि च बाह्लिकम् ।
प्रत्येकं पलसम्मानं घृतस्य कुडवन्तथा ॥ ४० ॥
सिद्धशीते ततो दद्यान्मधुनः कुड़वं तथा ।
जयेदेषोऽवलेहस्तु सर्वाण्यर्शांसि वेगतः ॥ ४१ ॥
दुर्नामप्रभवान् रोगानतीसारमरोचकम् ।
ग्रहणीं पाण्डुरोगञ्च रक्तपित्तञ्च कामलाम् ॥ ४२ ॥
अम्लपित्तं तथा शोथं कार्श्यञ्चैव प्रवाहिकाम् ।
अनुपाने प्रयोक्तव्यमाज्यं तक्रं पयो दधि ।
घृतं जलं वा जीर्णे च पथ्यभोजी भवेन्नरः ॥ ४३ ॥

कुटजाद्योऽवलेहः ।

कुटजत्वक्तुलामर्द्धं द्रोणनीरे विपाचयेत् ।
पादशेषसृतं नीत्वा चूर्णान्येतानि दापयेत् ॥ ४४ ॥
लज्जालु धातकी विल्वं पाठा मोचरसस्तथा ।
मुस्तं प्रतिविषा चैव प्रत्येकं स्यात्पलं पलम् ॥ ४५ ॥
ततस्तु विपचेद्भूयो यावद्दार्वी प्रलेपनम् ।
जलेन छागदुग्धेन पीतो मण्डेन वा जयेत् ॥ ४६ ॥
सर्वातिसारान् घोरांश्च नानावर्णान् सवेदनान् ।
असृग्दरं समस्तञ्च सर्वार्शांसि प्रवाहिकाम् ॥ ४७ ॥

कुटजाष्टकावलेहः ।

---

## अथ नवमोऽध्यायः ।

कल्काच्चतुर्गुणीकृत्य घृतं वा तैलमेव च ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

चतुर्गुणे द्रवे साध्यं तस्य मात्रा पलोन्मिता ।
निक्षिप्य क्वाथयेत्तोयं क्वाथ्यद्रव्याच्चतुर्गुणम् ॥ १ ॥
पादशिष्टं गृहीत्वा च स्नेहं तेनैव साधयेत् ।
चतुर्गुणं मृदुद्रव्ये कठिनेऽष्टगुणं जलम् ॥ २ ॥
अत्यन्तकठिने द्रव्ये नीरं षोड़शकं मतम् ।
तथाच मध्यमे द्रव्ये दद्यादष्टगुणं पयः ॥ ३ ॥
कर्षादितः पलं यावत् क्षिपेत् षोडशकं जलम् ।
तदूर्द्ध्वं कुडवं यावद्भवेदष्टगुणं जलम् ॥ ४४ ॥
प्रस्थादितः क्षिपेन्नीरं खारी यावच्चतुर्गुणम् ।
अम्बुक्वाथरसैर्युक्तं पृथक् स्नेहस्य साधनम् ॥ ५ ॥
कल्कस्यांशं तत्र दद्याच्चतुर्थं षष्ठमष्टमम् ।
दुग्धे दधिरसे तक्रे कल्को देयोऽष्टमांशकः ॥ ६ ॥
कल्कस्य सम्यक् पाकार्थं तोयमत्र चतुर्गुणम् ।
द्रवाणि यत्र स्नेहेषु पञ्चादीनि भवन्ति हि ॥ ७ ॥
तत्र स्नेहसमान्याहुर्यथापूर्वं चतुर्गुणम् ।
द्रवेण केवलेनैव स्नेहपाको भवेद्यदि ॥ ८ ॥
तत्राम्बुपिष्टः कल्कः स्याज्जलञ्चात्र चतुर्गुणम् ।
क्वाथेन केवलेनैव पाको यत्रेरितः क्वचित् ॥ ९ ॥
क्वाथद्रव्यस्य कल्कोऽपि तत्र स्नेहे प्रयुज्यते ।
कल्कहीनस्तु यः स्नेहः स साध्यः केवले द्रवे ॥ १० ॥
पुष्पकल्कस्तु यः स्नेहस्तत्र तोयं चतुर्गुणम् ।
स्नेहे स्नेहाष्टमांशश्च पुष्पकल्कः प्रयुज्यते ॥ ११ ॥
वर्त्तिवत् स्नेहकल्कः स्याद्यदाङ्गुल्या विमर्दितः ।
शब्दहीनोऽग्निनिक्षिप्तः स्नेहसिद्धो भवेत्तदा ॥ १२ ॥
यदा फेनोद्गमस्तैले फेनशान्तिश्च सर्पिषि ।
गन्धवर्णरसोत्पत्तिः स्नेहसिद्धिस्तदा भवेत् ॥ १३ ॥

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

स्नेहपाकस्त्रिधा प्रोक्तो मृदुर्मध्यः खरस्तथा।
ईषत्सरसकल्कस्तु स्नेहपाको मृदुर्भवेत्।
मध्यपाकस्य सिद्धिश्च कल्को नीरसकोमले ॥ १४ ॥
ईषत्कठिनकल्कश्च स्नेहपाको भवेत् खरः।
तदूर्द्ध्वं दग्धपाकः स्याद्दाहकृन्निष्प्रयोजनः ॥ १५ ॥
आमपाकश्च निर्वीर्य्यो वह्निमान्द्यकरो गुरुः।
नस्यार्थं स्यान्मृदुः पाको मध्यमः सर्वकर्मसु ॥ १६ ॥
अभ्यङ्गार्थं खरः प्रोक्तो युञ्ज्यादेवं यथोचितम्।
घृततैलगुड़ादींश्च साधयेन्नैकवासरे ॥ १७ ॥
प्रकुर्वन्त्युषिता ह्येते विशेषाद्गुणसञ्चयम्।
पिप्पली पिप्पलीमूलं चव्यचित्रकनागरैः ॥ १८ ॥
ससैन्धवैश्च पलिकैर्घृतप्रस्थं विपाचयेत्।
क्षीरं चतुर्गुणं दत्त्वा तत् घृतं प्लीहनाशनम्।
विषमज्वरमन्दाग्निहरं रुचिकरं परम् ॥ १९ ॥ षट्पलं घृतम्।
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
श्वदंष्ट्रा नागरं धान्यं पाठा विल्वं यवानिका ॥ २० ॥
द्रव्यैश्च पलकैरेतैश्चतुःषष्टिपलं घृतम्।
घृताच्चतुर्गुणं देयं चाङ्गेरीस्वरसं बुधैः ॥ २१ ॥
तथा चतुर्गुणं दत्त्वा दधिसर्पिर्विपाचयेत्।
शनैः शनैर्विपक्तव्यं चाङ्गेरीघृतमुत्तमम् ॥ २२ ॥
तत् घृतं कफवातघ्नं ग्रहण्यर्शोविकारनुत्।
हन्त्यानाहगुदभ्रंशं मूत्रकृच्छ्रं प्रवाहिकाम् ॥२३॥ चाङ्गेरीघृतं
मसूराणां पलशतं नीरद्रोणे विपाचयेत्।
पादशेषं शृतं नीत्वा दत्त्वा विल्वपलाष्टकम् ॥ २४ ॥
घृतप्रस्थं पचेत्तेन सर्वातीसारनाशनम्।
ग्रहणीभिन्नविट्कञ्च नाशयेच्च प्रवाहिकाम् ॥२५॥ मसूराद्यं घृतं

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

अश्वगन्धा पलशतं तदर्द्धं गोक्षुरं मतम् ।
शतावरी विदारी च शालिपर्णी बलाम्रता ॥ २६ ॥
अश्वत्थस्य च शुङ्गानि पद्मवीजं पुनर्नवा ।
काश्मर्य्याश्च फलञ्चैव माषवीजं तथैव च ॥ २७ ॥
पृथग्दशपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ।
द्रोणशेषरसे तस्मिन् पचेच्चैवं घृताढ़कम् ॥ २८ ॥
मृद्वीका पद्मकं कुष्ठं पिप्पली रक्तचन्दनम् ।
पत्रकं नागपुष्पञ्च आत्मगुप्तफलन्तथा ॥ २९ ॥
नीलोत्पलं सारिवे द्वे जीवनीयगणस्तथा ।
पृथक्कर्षसमान् भागांश्छर्कराया: पलद्वयम् ॥ ३० ॥
रसस्य पौण्ड्रके क्षुसमाढ़कैकं समाहरेत् ।
रक्तपित्तं क्षतं क्षीणं कामलां वातशोणितम् ॥ ३१ ॥
हलीमकं पाण्डुरोगं वर्णभेदं स्वरक्षयम् ।
मूत्रकृच्छ्रमुरोदाहं पार्श्वशूलञ्च नाशयेत् ॥ ३२ ॥
एतत्सर्पि: प्रयोक्तव्यं बह्वन्त:पुरचारिणाम् ।
स्त्रीणाञ्चैवाप्रजातानां दुर्बलानाञ्च देहिनाम् ॥ ३३ ॥
श्रेष्ठं बलकरं वर्ण्यं हृद्यं पुष्टिरसायनम् ।
ओजस्तेजस्करं हृद्यमायुष्यं प्राणवर्द्धनम् ॥ ३४ ॥
संवर्द्धयति शुक्रञ्च पुरुषं दुर्बलेन्द्रियम् ।
सर्वरोगविनिर्मुक्त: पय:सिक्तो यथा द्रुम: ।
कामदेव इति ख्यातं सर्पिरुक्तं महागुणम् ॥ ३५ ॥ कामदेवघृतं
त्रिफला द्वे निशे कौन्ती सारिवे द्वे प्रियङ्गुका ।
शालिपर्णी पृश्निपर्णी देवदार्व्येलवालुकम् ॥ ३६ ॥
नतं विशाला दन्ती च दाड़िमं नागकेशरम् ।
नीलोत्पलैलामञ्जिष्ठाविडङ्गं पद्मकुष्ठकम् ॥ ३७ ॥
जातीपुष्पं चन्दनञ्च तालीशं वृहती तथा ।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

एतैः कर्षसमैः कल्कैर्जलं दत्त्वा चतुर्गुणम् ॥ ३८ ॥
घृतप्रस्थं पचेद्धीमानपस्मारे ज्वरे क्षये।
उन्मादे वातरक्ते च कासे मन्दानले तथा ॥ ३९ ॥
प्रतिश्याये कटीशूले तृतीयकचतुर्थके।
मूत्रकृच्छ्रे विसर्पे च कण्डूपाण्ड्वामये तथा ॥ ४० ॥
विषहृये प्रमेहेषु सर्वथैव प्रयुज्यते।
वन्ध्यानां पुत्त्रदं भूतयक्षरक्षोहरं स्मृतम् ॥ ४१ ॥

पानीयकल्याणकघृतम्।

अमृताक्वाथकल्काभ्यां सक्षीरं विपचेद्घृतम्।
वातरक्तं जयत्याशु कुष्ठं जयति दुस्तरम् ॥४२॥ अमृताद्यं घृतम्।
सप्तच्छदः प्रतिविषा सम्पाकः कटुरोहिणी। कौड़
पाठा मुस्तमुशीरञ्च त्रिफला पर्पटस्तथा ॥ ४३ ॥
पटोलनिम्बमञ्जिष्ठाः पिप्पली पद्मकं शटी।
चन्दनं धन्वयासश्च विशाले द्वे निशे तथा ॥ ४४ ॥
गुडूची सारिवे द्वे च मूर्वा वासा शतावरी।
त्रायन्तीन्द्रयवा यष्टी भूनिम्बाश्चाक्षभागिकाः ॥ ४५ ॥
घृतं चतुर्गुणं दत्त्वा घृतादामलकीरसम्।
द्विगुणं सर्पिषश्चात्र जलमष्टगुणं भवेत् ॥ ४६ ॥
तत्सिद्धं पाययेत्सर्पिर्वातरक्तेषु सर्वदा।
कुष्ठानि रक्तपित्तञ्च रक्तार्शांसि च पाण्डुताम् ॥ ४७ ॥
हृद्रोगं गुल्मवीसर्पं प्रदरं गण्डमालिकाम्।
क्षुद्ररोगं ज्वरञ्चैव महातिक्तमिदं जयेत्॥४८॥ महातिक्तकं घृतम्
कासीसं द्वे निशे मुस्तं हरितालं मनःशिलाम्।
कम्पिल्लकं गन्धकञ्च विडङ्गं गुग्गुलुन्तथा ॥ ४९ ॥
मोम सिक्थकं मरिचं शुण्ठीं तुत्थकं गौरसर्षपम्।
रसाञ्जनञ्च सिन्दूरं श्रीवासं रक्तचन्दनम् ॥ ५० ॥

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

हरिद्रे निम्बपत्रं करञ्जं सारिवां वचाम् ।
मञ्जिष्ठां मधुकं मांसीं शिरीषं लोध्रपद्मकम् ॥ ५१ ॥
हरीतकीं प्रपुन्नाटं चूर्णयेत्कार्षिकं पृथक् ।
ततस्तच्चूर्णमालोड्य त्रिंशत्पलमिते घृते ॥ ५२ ॥
स्थापयेत्ताम्रपात्रे च घर्म्मे सप्त दिनानि वै ।
अस्याभ्यङ्गेन कुष्ठानि दद्रुपामाविचर्चिकाः ॥ ५३ ॥
शूकदोषविसर्पांश्च विस्फोटा वातरक्तजाः ।
शिरःस्फोटोपदंशाश्च नाडीदुष्टव्रणानि च ॥ ५४ ॥
शोथो भगन्दरश्चैव लूताः शाम्यन्ति देहिनाम् ।
शोधनं रोपणञ्चैव सुवर्णकरणं घृतम् ॥ ५५ ॥ कासीसाद्यं घृतम्
जाती निम्बपटोलञ्च द्वे निशे कटुरोहिणी ।
मञ्जिष्ठामधुकं सिक्थं करञ्जोशीरसारिवा ॥ ५६ ॥
तुल्यञ्च विपचेत्सम्यक्कल्कैरेभिर्घृतं बुधः ।
अस्य योगाद्विरोहन्ति सूक्ष्मनाडीव्रणा अपि ।
मर्म्माश्रिताः क्लेदिनश्च गम्भीराः सरुजो व्रणाः ॥ ५७ ॥
जात्याद्यं घृतम् ।

चित्रकः शङ्खिनी पथ्या कम्पिल्लस्त्रिवृतायुगम् ।
वृद्धदारुश्च सम्पाकी दन्ती च त्रिफलं तथा ॥ ५८ ॥
कोशातकी देवदाली नीलिनी गिरिकर्णिका ।
शातला पिप्पलीमूलं विडङ्गं कटुकी तथा ॥ ५९ ॥
हेमक्षीरी च विपचेत्कल्कैरेभिर्विचूर्णितैः ।
घृतप्रस्थं स्नुहीक्षीरं षट्पलं तु पलद्वयम् ॥ ६० ॥
अर्कक्षीरस्य मतिमान् तत्सिद्धं गुल्मकुष्ठहृत् ।
हन्ति शूलमुदावर्त्तं शोथाध्मानभगन्दरान् ॥ ६१ ॥
शमयत्युदराण्यष्टौ निपीतं बिन्दुसंख्यया ।
गोदुग्धेनोष्ट्रदुग्धेन कौलत्थेन शृतेन वा ॥ ६२ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

उष्णोदकेन वा पीत्वा विन्दुवेगैर्विरिच्यते।
एतद्विन्दुघृतं नाम नाभिलेपाद्विरिच्यते ॥६३॥ विन्दुघृतम्।
त्रिफलाया रसप्रस्थं प्रस्थं वासारसोद्भवम्।
भृङ्गराजरसप्रस्थं प्रस्थमाजं पयः स्मृतम् ॥ ६४ ॥
दत्त्वा तत्र घृतप्रस्थं कल्कैः कर्षमितैः पृथक्।
त्रिफला पिप्पली द्राक्षा चन्दनं सैन्धवं बला ॥ ६५ ॥
काकोली क्षीरकाकोली मेदा मरिचनागरम्।
शर्करा पुण्डरीकञ्च कमलञ्च पुनर्नवा ॥ ६६ ॥
निशायुग्मञ्च मधुकं सर्वैरेभिर्विपाचयेत्।
नक्तान्ध्यं नकुलान्ध्यञ्च कण्डूपिल्लन्तथैव च ॥ ६७ ॥
नेत्रस्रावञ्च पटलं तिमिरं काचकं जयेत्।
अन्येऽपि प्रशमं यान्ति नेत्ररोगाः सुदारुणाः।
त्रैफलं घृतमेतद्धि पाने नस्यादिषूदितम् ॥६८॥ त्रैफलं घृतम्।
द्वे हरिद्रे स्थिरा मूर्वा सारिवा चन्दनद्वयैः।
मधुपर्ण्या च मधुकपद्मकेशरपद्मकैः ॥ ६९ ॥
उत्पलोशीरमेदाभिस्त्रिफलापञ्चवल्कलैः।
कल्कैः कर्षमितैरेतैर्घृतप्रस्थं विपाचयेत् ॥ ७० ॥
विसर्पलूताविस्फोटविषकीटव्रणापहम्।
गौराद्यमिति विख्यातं सर्पिर्विषहरं स्मृतम् ॥७१॥ गौराद्यं घृतम्
बलामधुकरास्नाभिर्दशमूलफलं त्रिकैः।
पृथग् द्विपलिकैरेभिर्द्रोणनीरेण पाचयेत् ॥ ७२ ॥
मयूरपक्षपित्तान्त्रयकृत्पादास्यवर्जितम्।
पादशेषं शृतं नीत्वा क्षीरं दत्त्वा च तत्समम् ॥ ७३ ॥
घृतप्रस्थं पचेत्सम्यग् जीवनीयैः पिचून्मितैः।
तत्सिद्धं शिरसः पीड़ामन्यापृष्ठग्रहन्तथा ॥ ७४ ॥
अर्दितं कर्णनासाक्षिजिह्वागलरुजो जयेत्।

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पाने नस्ये तथाभ्यङ्गे कर्णपूरेषु युज्यते।
हेमन्तकाले शिशिरे वसन्तेषु च सेव्यते॥ ७५॥ मयूरघृतम्।
त्रिफलां मधुकं कुष्ठं द्वे निशे कटुरोहिणी।
विडङ्गं पिप्पली मुस्तं विशाला कट्फलं वचा॥ ७६॥
द्वे मेदे द्वे च काकोल्यौ सारिवे द्वे प्रियङ्गुका।
शतपुष्पा हिङ्गुरास्ना चन्दनं रक्तचन्दनम्॥ ७७॥
जातीपुष्पं तुगाक्षीरी कमलं शर्करा तथा।
अजमोदा च दन्ती च कल्कैरेतैश्च कार्षिकैः॥ ७८॥
जीवद्वत्सैकवर्णानां घृतप्रस्थं गवां पचेत्।
चतुर्गुणेन पयसा पचेदारण्यगोमयैः॥ ७९॥
सुतिथौ पुष्यनक्षत्रे मृद्भाण्डे ताम्रजे तथा।
ततः पिबेच्छुभदिने नारी वा पुरुषोऽथवा॥ ८०॥
एतत् सर्पिर्नरः पीत्वा स्त्रीषु नित्यं वृषायते।
पुत्रानुत्पादयेद्वीरान् बन्ध्यापि लभते सुतम्॥ ८१॥
अनायुषं वा जनयेद्यावद्भूत्वा पुनः स्थिता। आयुरहितं
पुत्रं प्राप्नोति सा नारी बुद्धिमन्तं शतायुषम्॥ ८२॥ गर्भं च धारयति
एतत् फलघृतं नाम भारद्वाजेन भाषितम्।
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र चिकित्सकाः॥ ८३॥ त्रैफलघृतम्
वृषनिम्बामृताव्याघ्रीपटोलानां शृतेन च।
कल्केन पक्वं सर्पिस्तु निहन्याद्विषमज्वरान्।
पाण्डुकुष्ठं विसर्पञ्च कृमीनर्शांसि नाशयेत्॥ ८४॥

पञ्चतिक्तकं घृतम्।

सहचरे द्वे त्रिफलां गुडूचीं सपुनर्नवाम्।
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम्॥ ८५॥
कल्कीकृत्य घृतप्रस्थं पचेत् क्षीरे चतुर्गुणे।
तत्सिद्धं पाययेन्नारीं योनिशूलनिपीडिताम्॥ ८६॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पीड़िता चलिता या च निःसृता विवृता च या।
पित्तयोनिश्च विभ्रान्ता षण्डयोनिश्च या स्मृता ॥ ८७ ॥
प्रपद्यन्ते हि ताः स्थानं गर्भं गृह्णन्ति चासकृत्।
एतत् फलघृतं नाम योनिदोषहरं परम् ॥ ८८ ॥ फलघृतम्।

---

बदरी वृक्षस्थला दोति
हरिहरनाथेनोक्तं

## अथ दशमोऽध्यायः।

लाक्षाढकं क्वाथयित्वा जलस्य चतुराढकैः।
चतुर्थांशं शृतं नीत्वा तैलप्रस्थे विनिक्षिपेत् ॥ १ ॥
कल्काच्चतुर्गुणं स्नेहं स्नेहात् क्वाथं चतुर्गुणम्।
क्वाथाच्चतुर्गुणं वारि साध्यं साध्यस्य मे मतिः ॥ २ ॥
प्रथमे दापयेद्दुग्धं द्वितीये सर्पिषं तथा।
तृतीये दापयेत् कल्कं चतुर्थे क्वाथमावपेत् ॥ ३ ॥
मस्त्वाढकञ्च गोदध्नस्तथैव विनियोजयेत्।
शतपुष्पामश्वगन्धां हरिद्रां देवदारु च ॥ ४ ॥
कटुकां रेणुकां मूर्वां कुष्ठञ्च मधुयष्टिकाम्।
उशीरं पद्मकं मांसीं दार्वीं मञ्जिष्ठकां बलाम् ॥ ५ ॥
चन्दनं मुस्तकं रास्नां पृथक्कर्षप्रमाणतः ॥ ५ ॥
चूर्णयेत्तत्र निक्षिप्य साधयेन्मृदुवह्निना।
अस्याभ्यङ्गात्प्रशाम्यन्ति सर्वेऽपि विषमज्वराः ॥ ६ ॥
कासश्वासप्रतिश्यायास्त्रिकपृष्ठग्रहास्तथा।
वातपित्तमपस्मारमुन्मादं यक्षराक्षसान् ॥ ७ ॥
कण्डूं शूलञ्च दौर्गन्ध्यं गात्राणां स्फुटनं जयेत्।
पुष्टगर्भा भवेदस्य गर्भिण्यभ्यङ्गतो भृशम् ॥८॥ लाक्षाद्यं तैल।
अश्वगन्धां बलां बिल्वं पाटलां बृहतीद्वयम्।
श्वदंष्ट्रातिबला निम्बाश्योनाकञ्च पुनर्नवाम् ॥ ९ ॥
प्रसारिणीमग्निमन्थं कुर्याद्दशपलं पृथक्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

चतुर्द्रोणेऽम्भसि पक्त्वा पादशेषं शृतं नयेत् ॥ १० ॥
तैलाढकेन संयोज्य शतावर्य्या रसाढकम्।
क्षिपेत्तत्र च गोक्षीरं तैलात्तस्माच्चतुर्गुणम् ॥ ११ ॥
शनैर्विपाचयेदेभिः कल्कैः द्विपलिकैः पृथक्।
कुष्ठैला चन्दनं वालां मांसीशैलेयसैन्धवैः ॥ १२ ॥
अश्वगन्धाबलारास्नाशतपुष्पेन्द्रदारुभिः।
पर्णीचतुष्टयेनैव तगरेण च साधयेत् ॥ १३ ॥
तत्तैलं नावनाभ्यङ्गपाने वस्तौ च योजयेत्।
पक्षाघातं हनुस्तम्भं मन्यास्तम्भं गलग्रहम् ॥ १४ ॥
कुब्जत्वं वधिरत्वं च गतिभङ्गं कटिग्रहम्।
गात्रशोषेन्द्रियध्वंसे नष्टशुक्रं ज्वरक्षयान् ॥ १५ ॥
अण्डवृद्धिं कुरण्डञ्च दन्तरोगं शिरोग्रहम्।
पार्श्वशूलञ्च पाङ्गुल्यं बुद्धिहान्यञ्च गृध्रसीम् ॥ १६ ॥
अन्यांश्च विषमान् वातान् जयेत्सर्वाङ्गसंश्रयान्।
अस्य प्रभावाद्वन्ध्यापि नारी पुत्रम्प्रसूयते ॥ १७ ॥
मर्त्यो गजो वा तुरगस्तैलादस्मात् सुखी भवेत्।
यथा नारायणो देवो दुष्टदैत्यविनाशनः।
तथैव वातरोगाणां नाशनं तैलमुत्तमम्॥१८॥ नारायणं तैलम्।
बलामूलकषायेण दशमूलशृतेन च।
कुलत्थयवकोलानां क्वाथेन पयसा तथा ॥ १९ ॥
अष्टाष्टभागयुक्तेन भागमेकञ्च तैलतः।
गणेन जीवनीयेन शतावर्य्येन्द्रदारुणी ॥ २० ॥
मञ्जिष्ठाकुष्ठशैलेयतगरागुरुसैन्धवैः।
वचा पुनर्नवा मांसी सारिवाद्वयपत्रकैः ॥ २१ ॥
शतपुष्पाश्वगन्धाभ्यां मिश्रयित्वा विपाचयेत्।
गर्भार्थिनीनां नारीणां नराणां क्षीणरेतसाम् ॥ २२ ॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

व्यायामक्षीणगात्राणां सूतिकानाञ्च युज्यते।
राज्ञां योग्यमिदं तैलं सुखिनाञ्च विशेषतः।
बलातैलमिति ख्यातं सर्ववातामयापहम्॥ २३॥ बलातैलम्।
प्रसारिणी पलशतं जलद्रोणे विपाचयेत्।
पादशिष्टः शृतो ग्राह्यस्तैलं दधि च तत्समम्॥ २४॥
काञ्जिकञ्च समं तेन क्षीरं तैलाच्चतुर्गुणम्।
तैलात्तथाष्टमांशेन सर्वकल्कानि योजयेत्॥ २५॥
मधुकं पिप्पलीमूलं चित्रकं सैन्धवं वचाम्।
प्रसरिणीदेवदारुरास्ना च गजपिप्पली॥ २६॥
भल्लातः शतपुष्पा च मांसी वापि विपाचयेत्।
एवं तैलवरं पक्कं वातश्लेष्मामयान् जयेत्॥ २७॥
कौब्जत्रपङ्गुत्वखञ्जत्वं गृध्रसीमर्दितं तथा।
हनुपृष्ठशिरोग्रीवाकटिस्तम्भञ्च नाशयेत्।
अन्यांश्च विषमान् वातान् सर्वानाशु व्यपोहति॥ २८॥
प्रसारिणीतैलम्।

माषा यवातसी क्षुद्रा मर्कटी च कुरण्टकः।
गोक्षुरः टुण्टुकश्चैषां कुर्य्यात्सप्तपलं पृथक्॥ २९॥
चतुर्गुणाम्बुना पक्का पादशेषं शृतं नयेत्।
कार्पासकास्थिवदरं शणवीजं कुलत्थकम्॥ ३०॥
पृथक् चतुर्दशपलं चतुर्गुणजले पचेत्।
चतुर्थांशावशिष्टं च गृह्णीयात् क्वाथमुत्तमम्॥ ३१॥
प्रस्थैकं छागमांसस्य चतुःषष्टिपले जले।
निक्षिप्य पाचयेद्धीमान् पादशेषं शृतं नयेत्॥ ३२॥
तैलप्रस्थे ततः सर्वान् क्वाथानेतान् विनिक्षिपेत्।
कल्कैरेभिश्च विपचेदमृताकुष्ठनागरैः॥ ३३॥
रास्नापुनर्नवैरण्डैः पिप्पल्या शतपुष्पया।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

बलाप्रसारिणीभ्याञ्च मांस्या कटुकया तथा ॥ ३४ ॥
पृथगर्द्धपलैरेतैः साधयेन्मृदुनाग्निना ।
हन्यात्तैलमिदं शीघ्रं ग्रीवास्तम्भापबाहुकौ ॥ ३५ ॥
अर्द्धाङ्गशोषमाक्षेपमूरुस्तम्भापतानकौ ।
शाखाकम्पं शिरःकम्पं विश्वाचीमर्दितं तथा ।
माषादिकमिदं तैलं सर्ववातविकारनुत् ॥३६॥ माषाद्यं तैलम् ।
शतावरी बलायुग्मं पर्ण्यौ गन्धर्वहस्तकः ।
अश्वगन्धाश्वदंष्ट्रा च विल्वः काशः कुरण्टकः ॥ ३७ ॥
एषां सार्द्धपलान् भागान् कल्पयेच्च विपाचयेत् ।
चतुर्गुणेन नीरेण पादशेषं शृतं नयेत् ॥ ३८ ॥
नियोज्य तैलप्रस्थेन क्षीरप्रस्थं विनिक्षिपेत् ।
शतावरीरसप्रस्थं जलप्रस्थञ्च योजयेत् ॥ ३९ ॥
शतावरी देवदारु मांसी तगरचन्दनम् ।
शतपुष्पा बला कुष्ठमेला शैलेयमुत्पलम् ॥ ४० ॥ शैलपातीसा
ऋद्धिर्मेधा च मधुकं काकोली जीवकस्तथा ।
एषां कर्षसमैः कल्कैस्तैलं गोमयवह्निना ॥ ४१ ॥
पचेदनेन तैलेन नरः स्त्रीषु वृषायते ।
नारी च लभते पुत्रं योनिशूलञ्च नश्यति ॥ ४२ ॥
अङ्गशूलं शिरःशूलं कामलां पाण्डुतां गरम् ।
गृध्रसीप्लीहशोषांश्च मेहान् दण्डापतानकम् ॥ ४३ ॥
सदाहं वातरक्तञ्च वातपित्तगदार्दितम् ।
असृग्दरन्तथाध्मानं रक्तपित्तं नियच्छति ।
शतावरीतैलमिदं कृष्णात्रेयेण भाषितम् ॥ ४४ ॥

ओं नमो नारायणीये स्वाहा ।

उत्तराभिमुखो भूत्वा खनेत् खदिरशङ्कुना ।
ओं सर्वव्याधिसाधनीये स्वाहा । इत्युत्पाटनमन्त्रः ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

ओँ कुमारीजीवनीये स्वाहा। इति पावनमन्त्रः॥ ४५॥

शतावरीदिव्यौषधतैलम्।

कासीसं लाङ्गली कुष्ठं शुण्ठी कृष्णा च सैन्धवम्।
मनःशिलाश्वमारश्च विड़ङ्गं चित्रको वृषः॥ ४६॥
दन्ती कोशातकी वीजं हेमाह्वा हरितालकम्।
कल्कैः कर्षमितैस्तैलन्ततः प्रस्थं विपाचयेत्॥ ४७॥
स्नुह्यर्कपयसी दद्यात् पृथग् द्विपलसम्मिते।
चतुर्गुणं गवां मूत्रं दत्त्वा सम्यक् प्रसाधयेत्॥ ४८॥
कथितं क्षारनादेन तैलमर्शोविनाशनम्।
क्षारवत् पातयत्येतदर्शांस्यभ्यङ्गतो भृशम्।
बलिं न दूषयत्येतत् क्षारकर्मकरं स्मृतम्॥४९॥ कासीसाद्यं तैलं

मञ्जिष्ठासारिवासर्जयष्टीसिक्थैः पयोऽन्वितैः।
पिण्डाख्यं साधयेत्तैलमभ्यङ्गाद्वातरक्तनुत्॥५०॥ पिण्डतैलम्।

अर्कपत्ररसे पक्वा हरिद्राकल्कसंयुतम्।
नाशयेत्सार्षपं तैलं पामां कच्छू विचर्चिकाम्॥५१॥ अर्कतैलम्।

मरिचं हरितालञ्च त्रिवृतं रक्तचन्दनम्।
मुस्तं मनःशिलामांसी द्वे निशे देवदारु च॥ ५२॥
विशाला करवीरञ्च कुष्ठमर्कपयस्तथा।
तथैव गोमयरसं कुर्य्यात् कर्षमितान् पृथक्॥ ५३॥
विषञ्चार्द्धपलं देयं प्रस्थञ्च कटुतैलकम्।
गोमूत्रं द्विगुणं दद्यात् जलञ्च द्विगुणं भवेत्॥ ५४॥
मरिचाद्यमिदं तैलं सिद्धं कुष्ठप्रणाशनम्।
जयेत् श्वित्राणि सर्वाणि पुण्डरीकं विचर्चिकाम्।
पामां सिध्मानि रकसान्दद्रूं कच्छूं प्रणाशयेत्॥ ५५॥

मरिचाद्यं तैलम्।

त्रिफलारिष्टभूनिम्बं द्वे निशे रक्तचन्दनम्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

एतैः सिद्धमकृच्छाणां तैलमभ्यञ्जने हितम् ॥ ५६ ॥ त्रैफलं तैलम्
भावयेन्निम्बवीजानि भृङ्गराजरसेन हि।
तथाऽसनस्य तोयेन तत्तैलं हन्ति नस्यतः।
अकालपलितं सद्यः पुंसां दुग्धान्नभोजिनाम् ॥ ५७ ॥

निम्बवीजतैलम्।

यष्टीमधुकक्षाराभ्यां नवधात्रीफलैः स्रुतम्।
तैलं नस्ये कृतं कुर्य्यात् केशान् श्मश्रूणि सङ्घशः॥ ५८ ॥

यष्टीमधुकतैलम्।

करञ्जस्त्रिवृकौ जाती करवीरैश्च पाचितम्।
तैलमेभिर्हुतं हन्यादभ्यङ्गादिन्द्रलुप्तकम् ॥५९॥ करञ्जाद्यं तैलम्।
नीलिका केतकी कन्दं भृङ्गराजः कुरण्टकः।
तथार्जुनस्य पुष्पाणि वीजकाः सुमनोऽपि वा ॥ ६० ॥
कृष्णास्तिलाश्च तगरं समूलं कमलं तथा।
अयोरजः प्रियङ्गुश्च दाड़िमत्वग् गुडूचिका ॥ ६१ ॥
त्रिफलापद्मपङ्कश्च कल्कैरेभिः पृथक् पृथक्।
कर्षमानैः पचेत्तैलं त्रिफलाक्वाथसंयुतम् ॥ ६२ ॥
भृङ्गराजरसेनैव सिद्धं केशस्थिरीकृतम्।
अकालपलितं हन्ति दारुणञ्चोपजिह्विकाम् ॥ ६३ ॥

नीलिकाद्यं तैलम्।

भृङ्गराजरसेनैव लोहकिट्टं फलत्रिकम्।
सारिवा च पचेत्कल्कैस्तैलं दारुणनाशनम्।
अकालपलितं कण्डूमिन्द्रलुप्तञ्च नाशयेत् ॥ ६४ ॥ भृङ्गराजतैलम्
इरिमेदत्वचं क्षुण्णां पचेच्छतपलोन्मितम्।
जलद्रोणेन तत्क्वाथं गृह्णीयात्पादशेषितम् ॥ ६५ ॥
तैलस्यार्द्धाढकं दत्त्वा कल्कैः कर्षमितैः पचेत्।
इरिमेदलवङ्गाभ्यां गैरिकागुरुपद्मकैः ॥ ६६ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मञ्जिष्ठालोध्रमधुकैर्लाक्षान्यग्रोधमुस्तकैः।
त्वग्जातीफलकर्पूरकङ्कोलखदिरैस्तथा ॥ ६७ ॥
पतङ्गधातकीपुष्पासूक्ष्मैलानागकेशरैः।
कट्फलेन च संसिद्धं तैलं मुखरुजञ्जयेत् ॥ ६८ ॥
प्रदुष्टमांसं चलितं शीर्णदन्तञ्च सौषिरम्।
शीताद्यं दन्तहर्षञ्च विद्रधिकृमिदन्तकम्।
दन्तस्फुटनदौर्गन्ध्यजिह्वाताल्वोष्ठजं रुजम् ॥ ६९ ॥
इरिमेदाद्यं तैलम्।
हिङ्गुतुम्बरुशुण्ठीभिः कटुतैलं विपाचयेत्।
तस्य पूरणमात्रेण कर्णशूलं प्रणश्यति ॥ ७० ॥ हिङ्ग्वाद्यं तैलम्।
बालविल्वानि गोमूत्रे पिष्ट्वा तैले विपाचयेत्।
साजक्षीरं च नीरञ्च वाधिर्य्ये कर्णपूरणम् ॥७१॥ इति विल्वतैलम्।
बालमूलकशुण्ठीनां क्षारः क्षारयुगस्तथा।
लवणानि च पञ्चैव हिङ्गुशिग्रुमहौषधम ॥ ७२ ॥
देवदारु वचा कुष्ठं शतपुष्पा रसाञ्जनम्।
ग्रन्थिकं भद्रमुस्तञ्च कल्कैः कर्षमितैः पृथक् ॥ ७३ ॥
तैलप्रस्थञ्च विपचेत्कदलीवीजपूरयोः।
रसाभ्यां मधुयुक्तेन चतुर्गुणमितेन च ॥ ७४ ॥
पूयस्रावं कर्णनादं शूलं वधिरतां कृमीन्।
अन्यांश्च कर्णजान् रोगान्मुखरोगांश्च नाशयेत् ॥ ७५ ॥
इति क्षारतैलम्।

जम्बीराणां फलरसः प्रस्थैकः कुडवोन्मितम्।
माक्षिकं तत्र दातव्यं पलैका पिप्पली स्मृता ॥ ७६ ॥
एतदेकीकृतं सर्वं मृद्भाण्डे निधापयेत्।
धान्यराशौ स्थितं मासं मधुयुक्तमुदाहृतम् ॥ ७७ ॥
मधुयुक्तविधानं क्षारतैलम्।

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पाठा द्वे च निशे मूर्वापिप्पलीजातिपल्लवैः।
दन्त्या च तैलं संसिद्धं नस्यं स्याद्दुष्टपीनसे ॥७८॥ पाठाद्यं तैलम्
कुष्ठविल्वकणाशुण्ठी द्राक्षाकल्ककषायवत्।
साधितन्तैलमाज्यं वा नस्यात् क्षवथुनाशनम् ॥७९॥ कुष्ठतैलम्।
व्याघ्रीदन्तीवचाशिग्रुतुलसीव्योषसैन्धवैः।
कफस्य पाचनं तैलं पूतिनासागदापहम् ॥८०॥ व्याघ्रीतैलम्।
गृहधूमकणादारुक्षारनक्ताह्वसैन्धवैः।
सिद्धं शिखरिवीजैश्च तैलं नासार्शसां हितम् ॥८१॥ गृहधूमतैलम्
वज्रीक्षीरं रविक्षीरं द्रवं धत्तूरचित्रजम्।
महिषीविड्भवं द्रावं सर्वांशं तिलतैलकम् ॥ ८२ ॥
पचेत्तैलावशेषञ्च गोमूत्रेऽथ चतुर्गुणे।
तैलावशेषं पक्वा च तत्तैलं प्रस्थमात्रकम् ॥ ८३ ॥
गन्धकाग्निशिलातालं विड़ङ्गातिविषाविषम्।
तिक्तकोशातकी कुष्ठं वचा मांसी कटुत्रयम् ॥ ८४ ॥
पीतदारु च यष्ट्याह्वं स्वर्जिकाक्षारजीरकम्।
देवदारु च कर्षांशञ्चूर्णं तैले विमिश्रयेत्।
वज्रतैलमिदं ख्यातमभ्यङ्गात्सर्वकुष्ठनुत् ॥८५॥ वज्राद्यं तैलम्।
करवीरशिफादन्तीं त्रिवृत्कोषातकीफलम्।
रम्भाक्षारोदकं तैलं प्रशस्तं लोमशातनम् ॥ ८६ ॥
करवीराद्यं तैलम्।

---

अथ एकादशोऽध्यायः।

द्रवेषु चिरकालस्थं द्रव्यं यत्सन्धितं भवेत्।
आसवारिष्टभेदैस्तु प्रोच्यते भेषजोचितम् ॥ १ ॥
यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः।
अरिष्टः क्वाथसाध्यः स्यात् तयोर्मानं पलोन्मितम् ॥ २ ॥

CCO, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

अनुक्तमानारिष्टेषु द्रवे द्रोणे गुडातुलाम् ।
क्षौद्रं क्षिपेद्गुडादर्द्धं प्रक्षेपं दशमांशिकम् ॥ ३ ॥
ज्ञेयः शीतरसः सीधुर पक्वमधुरद्रवैः ।
सिद्धः पक्वरसः सीधुः सम्पक्वमधुरद्रवैः ॥ ४ ॥
परिपक्वान्नसन्धानसमुत्पन्नां सुरां जगुः ।
सुरामण्डः प्रसन्ना स्यात्ततः कादम्बरी घना ॥ ५ ॥
तदधो जगलो ज्ञेयो मेदको जगलाद्घनः ।
वक्कसो हृतसारः स्यात् सुराबीजञ्च किण्वकम् ॥ ६ ॥
यत्तालखर्जूररसैः सन्धिता सा हि वारुणी ।
कन्दमूलफलादीनि सस्नेहलवणानि च ॥ ७ ॥
यत्र द्रवेऽभिसूयन्ते तत्सूक्तमभिधीयते ।
विनष्टमम्लतां यातं मद्यं वा मधुरद्रवः ॥ ८ ॥
विनष्टः सन्धितो यस्तु तच्चुक्रमभिधीयते ।
गुडाम्बुना सतैलेन कन्दशाकफलैस्तथा ॥ ९ ॥
सन्धितञ्चाम्लतां जातं गुडसूक्तं प्रचक्षते ।
एवमेवेक्षुसूक्तं स्यान्मृद्वीकासम्भवन्तथा ॥ १० ॥
तुषाम्बु सन्धितं ज्ञेयमामैर्विदलितैर्यवैः ।
यवैस्तु निस्तुषैः पक्वैः सौवीरं सन्धितम्भवेत् ॥ ११ ॥
कुल्माषधान्यमण्डादि सन्धितं काञ्जिकं विदुः ।
शाण्डाकी सन्धिता ज्ञेया मूलकैः सर्षपादिभिः ॥ १२ ॥
[अथ आसवाः] उशीरं बालकं पद्मं काश्मरीनीलमुत्पलम् ।
प्रियङ्गुः पद्मकं लोध्रं मञ्जिष्ठाधन्वयासकम् ॥ १३ ॥
पाठा किराततिक्तञ्च न्यग्रोधोडुम्बरं शटीम् ।
पर्पटं पुण्डरीकञ्च पटोलं काञ्चनारकम् ॥ १४ ॥
जम्बूशाल्मलिनिर्यासं प्रत्येकं पलसम्मितान् ।
भागांस्तु चूर्णितान् कृत्वा द्राक्षायाः पलविंशतिम् ॥ १५ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

धातुकीं षोडशपलां जलद्रोणद्वये क्षिपेत्।
शर्करायास्तुलां दत्त्वा क्षौद्रस्यार्द्धतुलान्तथा॥ १६॥
मासं संस्थापयेद्भाण्डे मांसीमरिचधूपिते।
उशीरासव इत्येष रक्तपित्तविनाशनः।
पाण्डुकुष्ठप्रमेहार्शःकृमिशोथहरस्तथा॥ १७॥ उशीरासवः।

पिप्पली मरिचं चव्यं हरिद्रा चित्रको घनः।
विडङ्गं क्रमुका लोध्रः पाठा धात्र्येलवालुकम्॥ १८॥
उशीरं चन्दनं कुष्ठं लवङ्गन्तगरन्तथा।
मांसीत्वगेलापत्रञ्च प्रियङ्गु नागकेशरम्॥ १९॥
एषामर्द्धपलान् भागान् सूक्ष्मचूर्णीकृतान् शुभान्।
जलद्रोणद्वये क्षिप्त्वा दद्याद्गुड़तुलात्रयम्॥ २०॥
पलानि दश धातुक्या द्राक्षा षष्टिपला भवेत्।
एतान्येकत्र संयोज्य मृदो भाण्डे विनिक्षिपेत्॥ २१॥
ज्ञात्वा रसगतं सर्वं पाययेदग्न्यपेक्षया।
क्षयं गुल्मोदरं कार्श्यं ग्रहणीं पाण्डुतान्तथा।
अर्शांसि नाशयेच्छीघ्रं पिप्पल्याद्यासवस्त्वयम्॥ २२॥
पिप्पल्याद्यासवः।

लोहचूर्णं त्रिकटुकं त्रिफलञ्च यवानिका।
विड़ङ्गं मुस्तकं चित्रं चतुःसंख्योपलं क्षिपेत्॥ २३॥
चूर्णीकृत्य ततः क्षौद्रं चतुःषष्टिपलं पृथक्।
दद्याद्गुड़तुलां तत्र जलद्रोणद्वयन्तथा॥ २४॥
घृतभाण्डे विनिक्षिप्य निदध्यान्मासमात्रकम्।
लोहासवममुं मर्त्यः पिबेद्वह्निकरं परम्॥ २५॥
पाण्डुश्वयथुगुल्मानि जठराण्यर्शसां रुजम्।
कुष्ठं प्लीहामयं कण्डूं कासं श्वासं भगन्दरम्।
अरोचकञ्च ग्रहणीं हृद्रोगञ्च विनाशयेत्॥ २६॥ लोहासवः।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

[अथारिष्टः] तुलां कुटजमूलस्य मृद्वीकार्द्धतुलान्तथा।
मधूकपुष्पकाश्मर्य्यभागान् दशपलोन्मितान् ॥ २७ ॥
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणञ्चैवावशेषितम्।
धातक्या विंशतिपलं गुड़स्य च तुलां क्षिपेत् ॥ २८ ॥
मासमात्रं स्थितो भाण्डे कुटजारिष्टसंज्ञितः।
ज्वरान् प्रशमयेत्सर्वान् कुर्य्यात्तीक्ष्णं धनञ्जयम् ॥२९॥ कुटजारिष्ट
विड़ङ्गं ग्रन्थिकं रास्ना कुटजत्वक्फलानि च।
पाठैलवालुकं धात्री भागान् पञ्चपलान् पृथक् ॥ ३० ॥
अष्टद्रोणेऽम्भसः पक्त्वा कुर्य्यात् द्रोणावशेषितम्।
पूते शीते क्षिपेत्तत्र क्षौद्रं पलशतत्रयम् ॥ ३१ ॥
धातकी विंशतिपलं त्रिजातं द्विपलं तथा।
प्रियङ्गुकाञ्चनाराणां सलोध्राणां पलं पलम् ॥ ३२ ॥
व्योषस्य च पलान्यष्टौ चूर्णीकृत्य प्रदापयेत्।
घृतभाण्डे विनिक्षिप्य मासमेकं विधारयेत् ॥ ३३ ॥
ततः पिबेद्यथार्हं तु जयेद्विद्रधिमुत्थितम्।
ऊरुस्तम्भाश्मरीमेहान् प्रत्यष्ठीलाभगन्दरान्।
गण्डमालां हनुस्तम्भं विड़ङ्गारिष्टसम्भवः ॥३४॥ विडङ्गारिष्टः।
तुलार्द्धं देवदारु स्याद्वासायाः पलविंशतिः।
मञ्जिष्ठेन्द्रयवा दन्ती तगरं रजनीद्वयम् ॥ ३५ ॥
रास्ना कृमिघ्नं मुस्तञ्च शिरीषं खदिरार्जुनौ।
भागान् दशपलान् दद्याद्यवान्या वत्सकस्य च ॥ ३६ ॥
चन्दनस्य गुडूच्याश्च रोहिण्याश्चित्रकस्य च।
भागानष्टपलानेतानष्टद्रोणेऽम्भसः पचेत् ॥ ३७ ॥
द्रोणशेषे कषाये च पूते शीते प्रदापयेत्।
धातक्याः षोडशपलं माक्षिकस्य तुलात्रयम् ॥ ३८ ॥
व्योषस्य द्विपलं दद्यात् त्रिजातकचतुःपलम्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

चतु:पलं प्रियङ्गोश्च द्विपलं नागकेशरम् ॥ ३९ ॥
सर्वाण्येतानि सञ्चूर्ण्य घृतभाण्डे विधारयेत् ।
मासादूर्द्धं पिवेदेनं प्रमेहं हन्ति दुस्तरम् ॥ ४० ॥
वातरोगग्रहण्यर्शोमूत्रकृच्छ्राणि नाशयेत् ।
देवदार्वादिकोऽरिष्टो दद्रुकुष्ठविनाशन: ॥४१॥ देवदार्वारिष्ट: मेहे
खदिरस्य तुलार्द्धन्तु देवदारु च तत्समम् ।
वाकुची द्वादशपला दार्वी स्यात्पलविंशति: ॥ ४२ ॥
त्रिफला विंशतिपलान्यष्टद्रोणेऽम्भस: पचेत् ।
कषाये द्रोणशेषे च पूते शीते विनिक्षिपेत् ॥ ४३ ॥
तुलाद्वयं माक्षिकस्य तुलैका शर्करा मता ।
धातक्या विंशतिपलं कङ्कोलं नागकेशरम् ॥ ४४ ॥
जातीफलं लवङ्गैलात्वक्पत्राणि पृथक् पृथक् ।
पलोन्मितानि कृष्णाया दद्यात्पलचतुष्टयम् ॥ ४५ ॥
घृतभाण्डे विनिक्षिप्य मासादूर्द्धं पिबेत्तत: ।
महाकुष्ठानि हृद्रोगं पाण्डुरोगार्वुदं तथा ॥ ४६ ॥
गुल्मं ग्रन्थिकृमीन् कासं तथा प्लीहोदरं जयेत् ।
एष वै खदिरारिष्ट: सर्वकुष्ठनिवारण: ॥ ४७ ॥ खदिरारिष्ट: । कुष्ठे
तुलाद्वयं तु वव्वूल्या चतुर्द्रोणे जले पचेत् ।
द्रोणशेषे रसे शीते गुडस्य त्रितुलां क्षिपेत् ॥ ४८ ॥
धातकीषोड़शपलां कृष्णाञ्च द्विपलांशिकाम् ।
जातीफलानि कङ्कोलं त्वगेलापत्रकेशरम् ॥ ४९ ॥
लवङ्गं मरिचञ्चैव पलिकान्युपकल्पयेत् ।
मासं भाण्डे स्थितं त्वेष वव्वूल्यारिष्टको जयेत् ।
क्षयं कुष्ठमतीसारं प्रमेहश्वासकासकान्॥५०॥वव्वूल्याद्यरिष्ट: । क्षये
द्राक्षातुलार्द्धं द्विद्रोणे जलस्य विपचेत् सुधी: ।
पादशेषे कषाये च पूते शीते विनि:क्षिपेत् ॥ ५१ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

गुड़स्य द्वितुलां तत्र त्वगेलापत्रकेशरम् ।
प्रियङ्गुर्मरिचं कृष्णा विड़ङ्गञ्चेति चूर्णयेत् ॥ ५२ ॥
पृथक् पलोन्मितैर्भागैर्घृतभाण्डे निधापयेत् ।
समन्ततो घटयित्वा पिबेज्जातरसन्ततः ॥ ५३ ॥
उरःक्षतं क्षयं हन्ति कासं श्वासगलामयान् ।
द्राक्षारिष्टाह्वयः प्रोक्तो बलकृन्मलशोधनः ॥ ५४ ॥ द्राक्षारिष्टः ।
रोहीतकतुलामेकाञ्चतुर्द्रोणे जले पचेत् ।
पादशेषे रसे पूते शीते पलशतद्वयम् ॥ ५६ ॥
दद्याद्गुड़स्य धातक्याः पलषोड़शिका मता ।
पञ्चकोलं त्रिजातञ्च त्रिफलाञ्च विनिक्षिपेत् ॥ ५७ ॥
चूर्णयित्वा पलांशेन ततो भाण्डे निधापयेत् ।
मासादूर्द्ध्वञ्च पिबतां गुदजा यान्ति संक्षयम् ॥ ५८ ॥
ग्रहणीपाण्डुहृद्रोगप्लीहगुल्मोदराणि च ।
कुष्ठशोफारुचिहरो रोहीतारिष्टसंज्ञितः ॥५९॥ रोहीतकारिष्टः
पर्ण्यौ बृहत्यौ गोकण्टबिल्वोऽग्निमन्थनो रलुः ।
पाटला काश्मरी चेति दशमूलमिहोच्यते ॥ ६० ॥
दशमूलानि कुर्वीत भागैः पञ्चपलैः पृथक् ।
पञ्चविंशत्पलं कुर्य्याच्चित्रकं पौष्करन्तथा ॥ ६१ ॥
कुर्य्याद्विंशत्पलं लोध्रं गुड़ूची तत्समा भवेत् ।
पलैः षोड़शभिर्धात्री रविसंख्यैर्दुरालभा ॥ ६२ ॥
खदिरो वीजसारश्च पथ्या चेति पृथक्पलैः ।
अष्टाभिर्गुणितैः कुष्ठं मञ्जिष्ठा देवदारु च ॥ ६३ ॥
विड़ङ्गं मधुकं भार्गी कपित्थोक्षः पुनर्नवा ।
चव्यं मांसी प्रियङ्गुश्च सारिवा कृष्णजीरकम् ॥ ६४ ॥
त्रिवृता रेणुकं रास्ना पिप्पली क्रमुकः सटी ।
हरिद्रा शतपुष्पा च पद्मकं नागकेशरम् ॥ ६५ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मुस्तमिन्द्रयवाः शृङ्गी जीवकर्षभकौ तथा।
मेदा चान्या महामेदा काकोल्यौ ऋद्धिवृद्धिके॥ ६६॥
कुर्यात् पृथक्द्विपलिका पचेदष्टगुणे जले।
चतुर्थांशशृतं नीत्वा मृद्भाण्डे सन्निधापयेत्॥ ६७॥
ततः षष्टिपलां द्राक्षां पचेन्नीरे चतुर्गुणे।
त्रिपादशेषं शीतञ्च पूर्वक्वाथे शृतं क्षिपेत्॥ ६८॥
द्वात्रिंशत्पलिकं क्षौद्रं दद्याद्गुड़चतुःशतम्।
त्रिंशत्पलानि धातक्याः कङ्कोलं जलचन्दनम्॥ ६९॥
जातीफलं लवङ्गञ्च त्वगेलापत्रकेशरम्।
पिप्पली चेति संचूर्ण्य भागैर्द्विपलिकैः पृथक्॥ ७०॥
शाणमात्राञ्च कस्तूरीं सर्वमेकत्र निक्षिपेत्।
भूमौ निखनयेद्भाण्डं ततो जातरसं पिबेत्॥ ७१॥
कतकस्य फलं क्षिप्त्वा रसं निर्मलतां नयेत्।
ग्रहणीमरुचिं शूलं श्वासकासभगन्दरान्॥ ७२॥
वातव्याधिं क्षयं छर्दिं पाण्डुरोगञ्च कामलाम्।
कुष्ठान्यर्शांसि मेहांश्च मन्दाग्निमुदराणि च॥ ७३॥
शर्करामश्मरीं मूत्रकृच्छ्रं धातुक्षयञ्जयेत्।
कृशानां पुष्टिजननो वन्ध्यानां पुत्रदः परम्।
अरिष्टो दशमूलाख्यस्तेजःशुक्रबलप्रदः॥ ७४॥

इति दशमूलारिष्टः।

---

अथ द्वादशोऽध्यायः।

धातुशोधनमारणम्।

स्वर्णताराररताम्राणि नागवङ्गौ च तीक्ष्णकम्।
धातवः सप्त विज्ञेयास्ततस्तान् शोधयेद्बुधः॥ १॥
स्वर्णताराररताम्राय:पत्राण्यग्नौ प्रतापयेत्।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

निषिञ्चेत्तत्र तप्तानि तैले तक्रे च काञ्जिके ॥ २ ॥
गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा।
एवं स्वर्णादिलोहानां विशुद्धिः सम्प्रजायते ॥ ३ ॥
नागवङ्गौ प्रतप्तौ च गालितौ तौ निषेचयेत्।
त्रिधा त्रिधा विशुद्धिः स्याद्रविदुग्धेन च त्रिधा ॥ ४ ॥

[धातुमध्ये स्वर्णमारणम्] सुवर्णे द्विगुणं सूतमम्लेन सह मर्दयेत्
तद्गोलकसमं गन्धं निदध्यादधरोत्तरम् ॥ ५ ॥
गोलकञ्च ततो रुद्धा शरावदृढ़सम्पुटे।
त्रिंशद्वनोपलैर्दद्यात् पुटान्येवञ्चतुर्दश।
निरुत्थञ्जायते भस्म गन्धो देयः पुनः पुनः ॥ ६ ॥

[अपरविधिः] काञ्चने गालिते नागं षोड़शांशेन निक्षिपेत्।
चूर्णयित्वा तथाम्लेन घृष्ट्वा कृत्वा च गोलकम् ॥ ७ ॥
गोलकेन समं गन्धं दत्त्वा चैवाधरोत्तरम्।
शरावसम्पुटे धृत्वा पुटे त्रिंशद्वनोपलैः।
एवं सप्तपुटैर्हेमनिरुत्थम्भस्म जायते ॥ ८ ॥

[अन्यच्च] काञ्चनाररसैर्घृष्ट्वा समं सूतकगन्धकम्।
कज्जलीं हेमपत्राणि लेपयेत्समया तया ॥ ९ ॥
काञ्चनारत्वचः कल्कैर्मूषायुग्मं प्रकल्पयेत्।
धृत्वा तत्सम्पुटे गोलं मृण्मूषासम्पुटे च तत् ॥ १० ॥
निधाय सन्धिरोधञ्च कृत्वा संशोष्य कोकिलैः।
वह्निं खरतरं कुर्य्यादेवं दद्यात् पुटत्रयम् ॥ ११ ॥
निरुत्थञ्जायते भस्म सर्वकार्य्येषु योजयेत्।
काञ्चनारप्रकारेण लाङ्गली हन्ति काञ्चनम्।
ज्वालामुखी तथा हन्यात्तथा हन्ति मनःशिला ॥ १२ ॥

[अन्यदपि] शिलासिन्दूरयोश्चूर्णं समयोरर्कदुग्धकैः।
सप्तैव भावना दद्याच्छोषयेच्च पुनः पुनः ॥ १३ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

ततस्तु गालिते हेम्नि कल्कोऽयं दीयते समः।
पुनर्धमेदतितरां यथा कल्को विलीयते।
एवं वेलात्रयं दद्यात् कल्कं हेमस्तुतिर्भवेत्॥ १४॥
[अन्यच्च] पारावतमलैर्लिम्पेदथवा कुटजोद्भवैः। कुक्कुटोद्भवैः
हेमपत्राणि तेषाञ्च प्रदद्यादन्तरान्तरम्॥ १५॥
गन्धचूर्णसमं धृत्वा शरावयुगसम्पुटे। दत्त्वा
प्रदद्यात् कुक्कुटपुटं पञ्चभिर्गोमयोपलैः॥ १६॥
एवं नवपुटं दद्याद्दशमञ्च महापुटम्।
त्रिंशद्वनोपलैर्देयं जायते हेम भस्मताम्॥ १७॥
[तारमारणम्] भागैकं तालकं मर्द्यं याममम्लेन केनचित्।
तेन भागत्रयन्तारपत्राणि परिलेपयेत्॥ १८॥
धृत्वा मूषापुटे रुद्ध्वा पुटेत्त्रिंशद्वनोपलैः।
समुद्धृत्य पुनस्तालं दत्त्वा रुद्ध्वा पुटे पचेत्।
एवं चतुर्दशपुटैस्तारं भस्म प्रजायते॥ १९॥
[अन्यच्च] स्नुहीक्षीरेण सम्पिष्टं माक्षिकं तेन लेपयेत्।
तालकस्य प्रकारेण तारपत्राणि बुद्धिमान्।
पुटेच्चतुर्दशपुटैस्तारं भस्म प्रजायते॥ २०॥
[ताम्रमारणम्] सूक्ष्माणि ताम्रपत्राणि कृत्वा संस्वेदयेद्बुधः।
वासरत्रयमम्लेन ततः खल्वे विनिःक्षिपेत्॥ २१॥
पादांशं सूतकं दत्त्वा याममम्लेन मर्दयेत्।
तत उद्धृत्य पत्राणि लेपयेद् द्विगुणेन च॥ २२॥
गन्धकेनाम्लपिष्टेन तस्य कुर्य्याच्च गोलकम्।
ततः पिष्ट्वा च मीनाक्षीं चाङ्गेरीं वा पुनर्नवाम्॥ २३॥
तत्कल्केन बहिर्गोलं लेपयेदङ्गुलोन्मितम्।
धृत्वा तद्गोलकं भाण्डे शरावेण च रोधयेत्॥ २४॥
वालुकाभिः प्रपूर्य्याथ विभूतिलवणाम्बुभिः।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

दत्त्वा भाण्डमुखे मुद्रां ततश्चुल्ल्यां विपाचयेत् ॥ २५ ॥
क्रमवृद्ध्याग्निना सम्यक् यावद्यामचतुष्टयम् ।
स्वाङ्गशीतं समुद्धृत्य मर्द्दयेत् सूरणद्रवैः ॥ २६ ॥
दिनैकं गोलकं कुर्य्याद्दद्यात् गन्धेन लेपयेत् ।
सम्पुटेन ततो मूषां पुटे गजपुटे पचेत् ॥ २७ ॥
स्वाङ्गशीतं समुद्धृत्य मृतं ताम्रं शुभं भवेत् ।
वान्तिं भ्रान्तिं क्लमं रेचं न करोति कदाचन ॥ २८ ॥
[पीतर मारणम्] अर्कक्षीरेण सम्पिष्टो गन्धकस्तेन लेपयेत् ।
समिनारस्य पत्राणि शुद्धान्यम्लद्रवैर्मुहुः ॥ २९ ॥
ततो मूषापुटे धृत्वा पुटेद्गजपुटेन च ।
एवं पुटद्वयेनैव भस्मारं भवति ध्रुवम् ॥ ३० ॥
आरवत् कांस्यमप्येवं भस्मतां याति निश्चितम् ।
अर्कक्षीरवदाजं स्यात् क्षीरं त्रिगुंखिडका तथा ।
ताम्ररीतिध्वनिवधे समगन्धकयोगतः ॥ ३१ ॥
[नागमारणम्] ताम्बूलीरससम्पिष्टः शिलालेपात् पुनः पुनः ।
द्वात्रिंशद्भिः पुटैर्नागो निरुत्थो याति भस्मताम् ॥ ३२ ॥
[अन्यच्च] अश्वत्थचिंचात्वक्चूर्णं चतुर्थांशेन निक्षिपेत् ।
मृत्पात्रे विद्रुते नागे लोहदार्व्या प्रचालयेत् ॥ ३३ ॥
यामैकेन भवेद्भस्म तत्तुल्या च मनःशिला ।
काञ्जिकेन द्वयं पिष्ट्वा पचेद् दृढपुटेन च ॥ ३४ ॥
स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिकेन च ।
पुनः पचेत् शरावाभ्यामेवं षष्टिपुटैर्मृतिः ॥ ३५ ॥
[वङ्गमारणम्] मृत्पात्रे द्राविते वङ्गे चिञ्चाश्वत्थत्वचो रजः ।
क्षिप्त्वा क्षिप्त्वा चतुर्थांशमयोदर्व्या प्रचालयेत् ॥ ३६ ॥
ततो द्वियाममात्रेण वङ्गभस्म प्रजायते ।
अथ भस्मसमं तालं क्षिप्त्वाऽम्लेन प्रमर्द्दयेत् ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

ततो गजपुटे पक्वा पुनरम्लेन मर्दयेत् ॥ ३७ ॥
तालेन दशमांशेन याममेकं ततः पुटेत्।
एवं दशपुटैः पक्वो वङ्गस्तु म्रियते ध्रुवम् ॥ ३८ ॥
[लोहमारणम्] शुद्धलोहभवच्चूर्णं पातालगरुडीरसैः।
मर्दयित्वा पुटेद्वह्नौ दद्यादेवं पुटत्रयम् ॥ ३९ ॥
पुटत्रयं कुमार्य्या च कुठारच्छिन्निकाद्रवैः।
पुटषट्कं ततो दद्यादेवं तीक्ष्णमृतिर्भवेत् ॥ ४० ॥
[अन्यच्च] क्षिपेद् द्वादशमांशेन दरदं तीक्ष्णचूर्णतः।
मर्दयेत्कन्यकाद्रावैर्यामयुग्मं ततः पुटेत् ॥ ४१ ॥
एवं सप्तपुटैर्मृत्युं लोहचूर्णमवाप्नुयात्।
रसैः कुठारच्छिन्नायाः पातालगरुडीरसैः।
स्तन्येन चार्कदुग्धेन तीक्ष्णस्यैवं मृतिर्भवेत् ॥ ४२ ॥
[योगद्वयमाह]सूतकाद् द्विगुणं गन्धं दत्त्वा कृत्वा च कज्जलीम्।
द्वयोः समं लोहचूर्णं मर्दयेत्कन्यकाद्रवैः ॥ ४३ ॥
यामयुग्मं ततः पिण्डं कृत्वा ताम्रस्य पात्रके।
घर्मे धृत्वोरुवूकस्य पत्रैराच्छादयेद्बुधः ॥ ४४ ॥
यामार्द्धेनोष्णता भूयाद् धान्यराशौ न्यसेत्ततः।
दत्त्वोपरि शरावन्तु त्रिदिनान्ते समुद्धरेत् ॥ ४५ ॥
पिष्ट्वा च गालयेद्वस्त्रादेवं वारितरं भवेत्।
एवं सर्वाणि लोहानि स्वर्णादीन्यपि मारयेत् ॥ ४६ ॥
शिलान्धार्कदुग्धाक्ताः स्वर्णाद्याः सर्वधातवः।
म्रियन्ते द्वादशपुटैः सत्यं गुरुवचो यथा ॥ ४७ ॥

## अथोपधातुशोधनमारणम्।

माक्षिकं तुत्थकाभ्रं च नीलाञ्जनशिलालकाः।
रसकश्चेति विज्ञेया एते सप्तोपधातवः ॥ ४८ ॥

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

अथ स्वर्णमाक्षिकशोधनमारणम् ।

माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च ।
मातुलुङ्गद्रवैर्वाथ जम्बीरस्य द्रवैः पचेत् ॥ ४९ ॥
चालयेल्लोहजे पात्रे यावत्पात्रं तु लोहितम् ।
भवेत्ततस्तु संशुद्धिं स्वर्णमाक्षिकमृच्छति ॥ ५० ॥
कुलत्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत् ।
तक्रेण वाजमूत्रेण म्रियते स्वर्णमाक्षिकम् ॥ ५१ ॥

[तारमाक्षिकशोधनम्] कर्कोटीमेषशृङ्ग्युत्थैर्द्रवैर्जम्बीरजैर्दिनम् ।
भावयेदातपे तीव्रे विमला शुद्धिमृच्छति ॥ ५२ ॥

[तुत्थकशोधनम्] विष्ठायां मर्दयेत्तुत्थं मार्जारककपोतयोः ।
दशांशं टङ्कणं दत्त्वा पचेन्मृदु पुटेत्ततः ।
पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थविशुद्धये ॥ ५३ ॥

[अभ्रकशोधनम्] कृष्णाभ्रकं धमेद्वह्नौ ततः क्षीरे विनिःक्षिपेत् ।
भिन्नपत्रं तु तत् कृत्वा तण्डुलीयाम्लयोर्द्रवैः ।
भावयेदष्टयामं तदेवं शुध्यति चाभ्रकम् ॥५४॥ इति शोधनम् ।
कृत्वा धान्याभ्रकं तत् तु शोषयित्वाथ मर्दयेत् ।
अर्कक्षीरैर्दिनं खल्वे चक्राकारञ्च कारयेत् ॥ ५५ ॥
वेष्टयेदर्कपत्रैश्च सम्यग्गजपुटे पचेत् ।
पुनर्मर्द्यं पुनः पाच्यं सप्तवारं प्रयत्नतः ॥ ५६ ॥
ततो वटजटाक्वाथैस्तद्वद्देयं पुटत्रयम् ।
म्रियते नात्र सन्देहः सर्वयोगेषु योजयेत् ॥ ५७ ॥
तुल्यं घृतं मृताभ्रेण लोहपात्रे विपाचयेत् ।
घृते जीर्णे तदभ्रं तु सर्वयोगेषु योजयेत् ॥ ५८ ॥
मृतं त्वभ्रं हरेन्मृत्युं जरापलितनाशनम् ।
अनुपानैश्च संयुक्तं तत्तद्रोगहरं परम् ॥ ५९ ॥

[प्रथान्यप्रकारः] शुद्धं धान्याभ्रकं मुस्तं शुण्ठीषड्भागयोजितम्

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मर्दयेत्काञ्जिकेनैव दिनञ्चित्रकजैः रसैः ॥ ६० ॥
ततो गजपुटे दद्यात्तस्मादुद्धृत्य मर्दयेत् ।
त्रिफलावारिणा तद्वत् पुटेदेवं पुटैस्त्रिभिः ॥ ६१ ॥
वलागोमूत्रमुशलीतुलसीसूरणद्रवैः ।
मर्दितं पुटितं वह्नौ त्रिस्त्रिवेलं व्रजेन्मृतिम् ॥ ६२ ॥
[नीलाञ्जनशोधनं] नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितम् ।
दिनैकमातपे शुद्धं सर्वकार्य्येषु योजयेत् ॥ ६३ ॥
एवं गैरिककासीसटङ्कणानि वराटिका ।
शङ्खं तौरीचकं कुष्ठं शुद्धिमायाति निश्चितम् ॥ ६४ ॥
[मनःशिलाशोधनं]पचेत् त्र्यहमजामूत्रैर्दोलायन्त्रे मनःशिलाम्
भावयेत् सप्तधा पित्तैरजायाः शुद्धिमृच्छति ॥ ६५ ॥
[तालकशुद्धिः] तालकं कणशः कृत्वा सञ्चूर्णं काञ्जिके क्षिपेत् ।
दोलायन्त्रेण यामैकं ततः कुष्माण्डजैर्द्रवैः ॥ ६६ ॥
तिलतैले पचेद्यामं यामञ्च त्रिफलाजलैः ।
दोलायन्त्रे चतुर्यामं पाच्यं शुध्यति तालकम् ॥ ६७ ॥
[रसकशुद्धिः] नरमूत्रैश्च गोमूत्रैः सप्ताहं रसकं पचेत् ।
दोलायन्त्रेण शुद्धिः स्यात्ततः कार्य्येषु योजयेत् ॥ ६८ ॥
[सत्वनिर्गमः] लाक्षामीनापयश्छागं टङ्कणं मृगशृङ्गकम् ।
पिण्याकं सर्षपाः शिग्रुगुञ्जोर्णागुड़सैन्धवम् ॥ ६९ ॥
यवतिक्ता घृतं चौद्रं यथालाभं विचूर्णयेत् ।
एभिर्विमिश्रिताः सर्वे धातवो गाढ़वह्निना ।
मूषाध्माताः प्रजायन्ते मुक्तसत्वा न संशयः ॥ ७० ॥

अथ रत्नानां शोधनमारणम् ।

[आदौ वज्रमारणं] कुलत्थकोद्रवक्काथैर्दोलायन्त्रे विपाचयेत् ।
व्याघ्रीकन्दगतं वज्रं त्रिदिनं शुद्धिमृच्छति ॥ ७१ ॥
तप्तं तप्तं तु तद्वज्रं खरमूत्रैर्निषेचयेत् ।

CC0. Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

पुनस्ताप्यं पुनः सेच्यमेवं कुर्य्यात् त्रिसप्तधा ॥ ७२ ॥

मत्कुणैस्तालकं पिष्ट्वा यावद्भवति गोलकम्।

तद्गोले निहितं वज्रं तद्गोलच्छान्धितं धमेत् ॥ ७३ ॥

सिञ्चयेदश्वमूत्रेण तद्गोले च क्षिपेत् पुनः।

रुद्ध्वा ध्मातं पुनः सेच्यमेवं कुर्य्यात् त्रिसप्तधा।

एवं च म्रियते वज्रं चूर्णं सर्वत्र योजयेत् ॥ ७४ ॥

[अन्यदपि] हिङ्गुसैन्धवसंयुक्ते क्वाथे कौलत्थजे क्षिपेत्।

तप्तं तप्तं पुनर्वज्रं भूयाच्चूर्णं त्रिसप्तधा ॥ ७५ ॥

[अन्यच्च] मण्डूकं कांस्यजे पात्रे निरुद्ध्य स्थापयेत् सुधीः।

स भीतो मूत्रयेत्तत्र तन्मूत्रे वज्रमावपेत्।

तप्तं तप्तं च बहुधा वज्रस्यैवं मृतिर्भवेत् ॥ ७६ ॥

[वैक्रान्तमारणं] वैक्रान्तं वज्रवच्छोध्यं नीलं वा लोहितं तथा।

हयमूत्रेण तत् सिञ्चेत्तप्तं तप्तं त्रिसप्तधा ॥ ७७ ॥

ततस्तु मेषदुग्धेन पञ्चाङ्गे गोलकं क्षिपेत्।

पचेन्मूषापुटे रुद्ध्वा कुर्य्यादेवं च सप्तधा।

वैक्रान्तं भस्मतां याति वज्रस्थाने नियोजयेत् ॥ ७८ ॥

## अथ शेषरत्नशोधनमारणम्।

स्वेदयेद्दोलिकायन्त्रे जयन्त्याः स्वरसेन च।

मणिमुक्ताप्रवालानि यामैकं शोधनं भवेत् ॥ ७९ ॥

कुमार्य्यास्तण्डुलीयेन स्तन्येन च निषेचयेत्।

प्रत्येकं सप्तवेलं च तप्ततप्तानि कृत्स्नशः ॥ ८० ॥

मौक्तिकानि प्रवालानि तथा रत्नान्यशेषतः।

क्षणाद्विविधवर्णानि म्रियन्ते नात्र संशयः ॥ ८१ ॥

उक्तमाक्षिकवन्मुक्ताप्रवालानि च मारयेत्।

वज्रवत् सर्वरत्नानि शोधयेन्मारयेत्तथा ॥ ८२ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

अथ शिलाजतुशोधनम्।

शिलाजतु समानीय ग्रीष्मतप्तशिलाच्युतम्।
गोदुग्धैस्त्रिफलाक्वाथैः भृङ्गद्रावैश्च मर्दयेत्।
आतपे दिनमेकैकं तच्छुष्कं शुद्धतां व्रजेत्॥ ८३॥

अथान्यशिलाजतुकरणप्रकारः।

मुख्यां शिलाजतुशिलां सूक्ष्मखण्डप्रकल्पिताम्।
निक्षिप्यात्युष्णपानीये यामैकं स्थापयेत्सुधीः॥८४॥
मर्दयित्वा ततो नीरं गृह्णीयाद्वस्त्रगालितम्।
स्थापयित्वा च मृत्पात्रे धारयेदातपे खरे॥ ८५॥
उपरिस्थं घनं यत् स्यात् तत् क्षिपेदन्यपात्रके।
धारयेदातपे तस्मादुपरिस्थं घनं नयेत्॥ ८६॥
एवं पुनः पुनर्नीत्वा द्विमासाभ्यां शिलाजतु।
भूयात्काय्यंक्षमं वह्नौ क्षिप्तं लिङ्गोपमं भवेत्॥ ८७॥
मूत्रीदृशं च ततः शुद्धं सर्वकर्मसु योजयेत्।
अधःस्थितं च यच्छेषं तस्मिन्नीरं विनिःक्षिपेत्।
विमृद्य धारयेद् घर्मे पूर्ववच्चैव तन्नयेत्॥ ८८॥

[मण्डूरकरणम्] अक्षाङ्गारैः धमेत्किट्टं लौहजं तद्गवाञ्जलैः।
सेचयेत्तप्ततप्तं च सप्तवारं पुनः पुनः॥ ८९॥
चूर्णयित्वा ततः क्वाथैर्द्विगुणैस्त्रिफलाभवैः।
आलोड्य भर्जयेद्वह्नौ मण्डूरं जायते वरम्॥ ९०॥

[क्षारकल्पना] क्षारवृक्षस्य काष्ठानि शुष्काण्यग्नौ प्रदीपयेत्।
नीत्वा तद्भस्म मृत्पात्रे क्षिप्त्वा नीरे चतुर्गुणे॥ ९१॥
विमर्द्य धारयेद्रात्रौ प्रातरच्छं जलं नयेत्।
तन्नीरं क्वाथयेद्वह्नौ यावत्सर्वं विशुष्यति॥ ९२॥ विशुष्यति ३.१
ततः तत्तत् पात्रात्समुल्लिख्य क्षारो ग्राह्यः सितप्रभः।
३ पा चूर्णाभः प्रतिसार्य्यः स्यात् पेयः स्यात् क्वाथवत् स्थितः।

CC0. Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

इति क्षारद्वयं धीमान् युक्तकार्य्येषु योजयेत् ॥ ९३ ॥
इति श्रीशार्ङ्गधरे द्वादशोऽध्यायः।

---

## अथ त्रयोदशोऽध्यायः।

पारदः सर्वरोगाणां जेता पुष्टिकरः स्मृतः।
सुन्नेन साधितः कुर्य्यात् संसिद्धिं देहलोहयोः ॥ १ ॥
रसेन्द्रः पारदः सूतो हरजः सूतको रसः।
मुकुन्दश्चेति नामानि ज्ञेयानि रसकर्मसु ॥ २ ॥
ताम्रताराारनागाश्च हेमवङ्गौ च तीक्ष्णकम्।
कांस्यकं घृतलोहं च धातवो नव ये स्मृताः।
सूर्य्यादीनां ग्रहाणान्ते कथिता नामभिः क्रमात् ॥ ३ ॥
[रसशोधनं] राजीरसोनमूषायां रसं क्षिप्त्वा विबन्धयेत्।
वस्त्रेण दोलिकायन्त्रे स्वेदयेत् काञ्जिकैस्त्र्यहम् ॥ ४ ॥
दिनैकं मर्दयेत् सूतं कुमारीसम्भवैर्द्रवैः।
तथा चित्रकजैः क्वाथैः रसो मर्द्यः प्रयत्नतः ॥ ५ ॥
काकमाचीरसैस्तद्वद्दिनमेकञ्च मर्दयेत्।
त्रिफलायास्तथा क्वाथे रसो मर्द्यः प्रयत्नतः ॥ ६ ॥
ततस्तेभ्यः पृथक्कुर्य्यात् सूतं प्रक्षाल्य काञ्जिकैः।
ततः क्षिप्त्वा रसं खल्वे रसादर्द्धञ्च सैन्धवम् ॥ ७ ॥
मर्दयेन्निम्बुकरसैर्दिनमेकमनारतम्।
ततो राजीरसोनश्च मुख्यश्च नवसादरः ॥ ८ ॥
एतैरससमैस्तद्वत् सूतो मर्द्यस्तुषाम्बुना।
ततः संशोष्य चक्राभं कृत्वा लिप्त्वा च हिङ्गुना ॥ ९ ॥
द्विस्थालीसंपुटे धृत्वा पूरयेल्लवणेन च।
अधःस्थालीं ततो मुद्रां दद्याद् दृढतरां बुधः ॥ १० ॥
विशेषाग्निं विधायाधो निषिञ्चेदम्बु नोपरि।

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

ततस्तु कुर्य्यात्तीव्राग्निं तदधः प्रहरत्रयम्॥ ११॥
एवं निपत्य यात्यूर्द्ध्वं रसो दोषविवर्जितः।
अथोर्द्ध्वं पिठरीमध्ये लग्नो ग्राह्यो रसोत्तमः॥ १२॥
[गन्धकशोधनम्] लोहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत्।
तप्ते घृते तत्समानं क्षिपेद्गन्धकजं रजः॥ १३॥
विद्रुतं गन्धकं ज्ञात्वा दुग्धमध्ये विनिःक्षिपेत्।
एवं गन्धकशुद्धिः स्यात्सर्वकार्य्येषु योजयेत्॥ १४॥
[दरदशोधनम्] मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम्।
सप्तवारं प्रयत्नेन शुद्धिमायाति निश्चितम्॥ १५॥
[दरदाद्रसाकृष्टिः] निम्बुरसैः निम्बपत्ररसैर्वा यामसात्रकम्।
घृष्ट्वा दरदमूर्द्ध्वं च पातयेत्सूतयुक्तिवत्।
ततः शुद्धरसं तस्मान्नीत्वा कार्य्येषु योजयेत्॥ १६॥
[शुद्धरसस्य मुखकरणं] कालकूटो वत्सनाभः शृङ्गकश्च प्रदीपनः।
हालाहलो ब्रह्मपुत्रो हारिद्रः शुक्तकस्तथा॥ १७॥
सौराष्ट्रिक इति प्रोक्ता विषभेदा अमी नव।
अर्कसेहुण्डधत्तूरलाङ्गलीकरवीरकाः॥ १८॥
गुञ्जाहिफेना इत्येताः सप्तोपविषजातयः।
एतैर्विमर्दितः सूतश्छिन्नपक्षः प्रजायते।
मुखञ्च जायते तस्य धातूंश्च ग्रसतितराम्॥ १९॥ दत्त्वाद्ग्निपाना
[अन्यदपि] अथवा त्रिकटुक्षारौ राजीलवणपञ्चकम्।
रसोनो नवसारश्च शिग्रुश्चैकत्र चूर्णितैः॥ २०॥
समांशैः पारदादेतैर्जम्बीरेण द्रवेण च।
निम्बुतोयैः काञ्जिकैर्वा सोष्णखल्वे विमर्दयेत्॥ २१॥
अजाश्वकरीषाग्निं तु गर्त्ते तत् त्रितयं क्षिपेत्। त्रिदिनामित्यर्थः
तस्योपरि स्थितं खल्वं तप्तखल्वमिदं भवेत्।
अहोरात्रत्रयेण स्याद्रसो धातुचरं मुखम्॥ २२॥

CC0. Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

[अन्यच्च] अथवा विन्दुलीकीटैः रसो मर्द्यस्त्रिवासरम्।
लवणाम्लैः सुखं तस्य जायते धातुघस्मरम्॥ २३॥
[गन्धकजारणम्] अथ कच्छपयन्त्रेण गन्धजारणमुच्यते।
मृत्कुण्डे निःक्षिपेत्तोयं तन्मध्ये च शरावकम्॥ २४॥
महत्कुण्डपिधानाभं मध्ये मेखलया युतम्।
लिप्त्वा च मेखलामध्यं चूर्णेनात्र रसं क्षिपेत्॥ २५॥
रसस्योपरि गन्धस्य रजो दद्यात्समांशकम्।
दत्त्वोपरि शरावञ्च भस्ममुद्रां प्रदीपयेत्॥ २६॥
तस्योपरि पुटं दद्याच्चतुर्भिर्गोमयोपलैः।
एवं पुनः पुनर्गन्धं षड्गुणं जारयेद्बुधः।
गन्धे जीर्णे भवेत्सूतस्तीक्ष्णाग्निः सर्वकर्मकृत्॥ २७॥
[अथ रसमारणम्] धूमसारं रसं तोरीं गन्धकं नवसादरम्।
यामैकं मर्दयेदम्लैर्भागं कृत्वा समं समम्॥ २८॥
काचकूप्यां विनिःक्षिप्य ताञ्च मृद्वस्त्रमुद्रया।
विलिप्य परितो वक्त्रं मुद्रां दत्त्वा च शोषयेत्॥ २९॥
अधः सुच्छिद्रपिठरीमध्ये कूपीं निवेशयेत्।
पिठरीं वालुकापूरैर्भृत्वा चाकूपिकागलम्॥ ३०॥
निवेश्य चूल्यां तदधः कुर्य्याद्वह्निं शनैः शनैः।
तस्मादप्यधिकं किञ्चित्पावकं ज्वालयेत् क्रमात्॥ ३१॥
एवं द्वादशभिर्यामैर्म्रियते सूतकोत्तमः।
स्फोटयेत् स्वाङ्गशीतं तन्मूर्द्धगं गन्धकं त्यजेत्।
अधःस्थं मृतसूतं च सर्वकार्य्येषु योजयेत्॥ ३२॥
[अन्यच्च] अपामार्गस्य वीजानां मूषायुग्मं प्रकल्पयेत्।
तत्सम्पुटे न्यसेत् सूतं मलयूदुग्धमिश्रितम्॥ ३३॥
द्रोणपुष्पीप्रसूनानि विड़ङ्गमिरिमेदकः।
एतच्चूर्णमधोऽर्द्धञ्च दत्त्वा मुद्रा प्रदीयते॥ ३४॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

तं गोलमन्धयेत् सम्यक् मृत्मूषासम्पुटे सुधीः।
मुद्रां दत्त्वा शोषयित्वा ततो गजपुटे पचेत्।
एवमेकपुटेनैव जायते भस्मसूतकम् ॥ ३५ ॥
[अन्यदपि] काष्ठोदुम्बरिकादुग्धैः रसं किञ्चिद्विमर्दयेत्।
तद्दुग्धघृष्टहिङ्गोश्च मूषायुग्मं प्रकल्पयेत् ॥ ३६ ॥
क्षिप्त्वा तत्सम्पुटे सूतं तत्र मुद्रां प्रदापयेत्।
धृत्वा तं गोलकं प्राज्ञो मृत्मूषासम्पुटेऽधिकम्।
पचेन्मृदुपुटेनैव सूतिको याति भस्मताम् ॥ ३७ ॥
[अन्यच्च] नागवल्लीरसैर्घृष्टः काकोलीकन्दगर्भितः।
मृत्मूषासम्पूटे पक्वः सूतो यात्येव भस्मताम् ॥ ३८ ॥
इति रसशोधनमारणाध्यायः।

---

अथ चतुर्दशोऽध्यायः।

[ज्वराङ्कुशोरसः] खण्डितं हारिणं शृङ्गं ज्वालामुख्यारसैः समम्।
रुद्ध्वा भाण्डे पचेच्चुल्यां यामयुग्मन्ततो नयेत् ॥ १ ॥
अष्टांशन्त्रिकटुं दद्यान्निष्कमात्रं च भक्षयेत्।
नागवल्लीरसैः सार्द्धं वातपित्तज्वरापहम्।
अयं ज्वराङ्कुशो नाम रसः सर्वज्वरापहः ॥ २ ॥
[ज्वराारिरसः] पारदं रसकन्तालं तुल्यं टङ्कणगन्धकम्।
सर्वमेतत् समं शुद्धं कारवल्लीरसैर्दिनम् ॥ ३ ॥
मर्दयेल्लेपयेत्तेन ताम्रपात्रोदरं भिषक्।
अङ्गुल्यर्द्धप्रमाणेन ततो रुद्ध्वा च तन्मुखम् ॥ ४ ॥
पचेत्तं वालुकायन्त्रे क्षिप्त्वा धान्यानि तन्मुखे।
यदा स्फुटन्ति धान्यानि तदा सिद्धं विनिर्दिशेत् ॥ ५ ॥
ततो नयेत स्वाङ्गशीतं ताम्रपात्रोदराद्भिषक्।
रसं ज्वरारिनामानं विचूर्ण्य मरिचैः समम् ॥ ६ ॥

CC0. Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

मासैकं पर्णखण्डेन भक्षयेन्नाशयेज्ज्वरम्।
त्रिदिनैर्विषमन्तीव्रमेकद्वित्रिचतुर्थकम्॥ ७॥

[शीतज्वरारिरसः] तालकं तुत्थकं ताम्रं रसं गन्धं मनःशिलाम्।
कर्षं कर्षं प्रयोक्तव्यं मर्दयेत् त्रिफलाम्बुभिः॥ ८॥
गोलं न्यसेत् सम्पुटके पुटं दद्यात् प्रयत्नतः।
ततो नीलार्कदुग्धेन वज्रीदुग्धेन सप्तधा।
क्वाथेन दन्त्याः श्यामायाः भावयेत् सप्तधा पुनः॥ ९॥
माषमात्रं रसं देयं पञ्चाशन्मरिचैर्युतम्।
गुडञ्च्याणकञ्चैव तुलसीदलयुग्मकम्॥ १०॥
भक्षयेत् त्रिदिनं भक्त्या शीतारिर्दुर्लभः परम्।
पथ्यं दुग्धौदनं देयं विषमं शीतपूर्वकम्॥ ११॥
दाहपूर्वं हरत्याशु तृतीयकचतुर्थकौ।
द्व्याहिकं सततञ्चैव वैवर्ण्यञ्च नियच्छति॥ १२॥

अथ शीतज्वरघ्नी गुटिका।

भागैकं स्याद्रसाच्छुद्धादेलीयः पिप्पली शिवा।
आकारकरभो गन्धः कटुतैलेन शोधितः॥ १३॥
फलानि चेन्द्रवारुण्याश्चतुर्भागैर्मिता अमी।
एकत्र मर्दयेच्चूर्णमिन्द्रवारुणिकारसैः॥ १४॥
माषोन्मितां गुटीं कृत्वा दद्यात् सद्योज्वरे बुधः।
छिन्नारसानुपानेन ज्वरघ्नी गुटिका मता॥ १५॥

[लोकनाथरसः] शुद्धो बुभुक्षितः सूतो भागद्वयमितो भवेत्।
तथा गन्धस्य भागौ द्वौ कुर्यात्कज्जलिकान्तयोः॥ १६॥
सूताच्चतुर्गुणेष्वेव कपर्देषु विनिःक्षिपेत्।
भागैकं टङ्कणं दत्त्वा गोक्षीरेण विमर्दयेत्॥ १७॥
तथा शङ्खस्य खण्डानां भागानष्टौ प्रकल्पयेत्।
क्षिपेत् सर्वं पुटस्यान्तश्चूर्णलिप्तशरावयोः॥ १८॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

गर्त्ते हस्तोन्मिते धृत्वा पुटेद् गजपुटेन च ।
स्वाङ्गशीतं समुद्धृत्य पिष्ट्वा तत्सर्वमेकतः ॥ १९ ॥
षड्गुञ्जासंमितञ्चूर्णमेकोनत्रिंशदूषणैः ।
घृतेन वातजे दद्यान्नवनीतेन पित्तजे ॥ २० ॥
चौद्रेण श्लेष्मजे दद्यादतीसारे क्षये तथा ।
अरुचौ ग्रहणीरोगे कार्श्ये मन्दानले तथा ।
कासश्वासेषु गुल्मेषु लोकनाथरसं भिषक् ॥ २१ ॥
तस्योपरि घृतान्नञ्च भुञ्जीत कवलत्रयम् ।
मञ्चे चणैकमुत्तानः शयीतानुपधानके ॥ २२ ॥
अनम्लमन्नं सघृतं भुञ्जीत मधुरं दधि ।
प्रायेण जाङ्गलं मांसं प्रदेयं घृतपाचितम् ॥ २३ ॥
सदुग्धभक्तं दद्याच्च जातेऽग्नौ सान्ध्यभोजने ।
सघृतान् मुद्गवटकान् व्यञ्जनेष्ववचारयेत् ॥ २४ ॥
तिलामलककल्केन स्नापयेत्सर्पिषाऽथवा ।
अभ्यञ्जयेत् सर्पिषा च स्नानं कोष्णोदकेन च ॥ २५॥
क्वचित्तैलं न गृह्णीयान्न विल्वं कारवेल्लकम् ।
वार्त्ताकं शफरीं चिञ्चां त्यजेद् व्यायाममैथुने ॥ २६ ॥
मद्यं सन्धानकं हिङ्गुशुण्ठीमाषान्मसूरकान् ।
कूष्माण्डं राजिकां कोषं काञ्जिकञ्चैव वर्जयेत् ॥ २७ ॥
त्यजेदयुक्तनिद्राञ्च कांस्यपात्रे च भोजनम् ।
ककारादियुतं सर्वं त्यजेच्छाकफलादिकम् ॥ २८ ॥
ग्राह्योऽयं लोकनाथस्तु शुभनक्षत्रवासरैः ।
पूर्णातिथौ सिते पक्षे जाते चन्द्रबले तथा ॥ २९ ॥
पूजयित्वा लोकनाथं कुमारीं भोजयेत्ततः ।
दानं दत्त्वा द्विघटिकामध्ये ग्राह्यो रसोत्तमः ॥ ३० ॥
रसाच्चेज्जायते तापस्तदा शर्करया युतम् ।

CC0. Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

सत्वं गुडूच्या गृह्णीयाद्‌गोरोचनया युतम् ॥ २१ ॥
खर्जूरं दाड़िमं द्राक्षामिक्षुखण्डानि खादयेत्।
अरुचौ निस्तुषं धान्यं घृतभृष्टं सशर्करम् ॥ २२ ॥
दद्यात्तथा ज्वरे धान्यं गुडूचीक्काथमाहरेत्।
उशीरवासकक्काथं दद्यात्समधुशर्करम् ॥ २३ ॥
रक्तपित्ते कफे श्वासे कासे च ज्वरसंचये।
अग्निभृष्टजयाचूर्णं मधुना निशि दीयते ॥ २४ ॥
निद्रानाशेऽतिसारे च ग्रहण्यां मन्दपावके।
सौवर्चलाभयाकृष्णाचूर्णमुष्णोदकैः पिबेत् ॥ २५ ॥
शूलेऽजीर्णे तथा कृष्णा मधुयुक्ता ज्वरे हिता।
प्लीहोदरे वातरक्ते छर्द्यां चैव गुदाङ्कुरे ॥ २६ ॥
नासिकास्रुतरक्ते च रसं दाड़िमपुष्पजम्।
दूर्वायाः स्वरसं नस्यं प्रदद्याच्छर्करान्वितम् ॥ २७ ॥
नागं सगन्धकञ्चैव मरिचञ्च समांशकम्।
दग्ध्वा कपर्दिकानां च चूर्णं चापि समं क्षिपेत् ॥ २८ ॥
पारदं चार्द्धमात्रञ्च पञ्चाननरसः स्मृतः।
कोलमज्जां कणां वर्हिपक्षभस्म सशर्करम् ॥ २९ ॥
मधुना लेहयेच्छर्दिहिक्काकोपस्य शान्तये।
विधिरेष प्रयोज्यस्तु सर्वस्मिन् पोटलीरसे ॥ ४० ॥
मृगाङ्के हेमगर्भे च मौक्तिकाख्ये परेषु च।
इत्ययं लोकनाथोक्तो रसः सर्वरुजो जयेत् ॥ ४१ ॥
[मृगाङ्कपोटलीरसः] भुर्जवत्तनुपत्राणि हेम्नः सूक्ष्माणि कारयेत्
तुल्यानि तानि सूतेन खल्वे क्षिप्त्वा विमर्दयेत् ॥ ४२ ॥
काञ्चनाररसेनैव ज्वालामुख्या रसेन वा।
लाङ्गल्या वा रसैस्तावद् यावद्भवति पिष्टिका ॥ ४३ ॥
ततो हेम्नश्चतुर्थांशं टङ्कणं तत्र निःक्षिपेत्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पिष्टमौक्तिकचूर्णञ्च हेमद्विगुणमावपेत् ॥ ४४ ॥
तेषु सर्वसमं गन्धं क्षिप्त्वा चैकत्र मर्दयेत् ।
तेषां कृत्वा ततो गोलं वासोभिः परिवेष्टयेत् ॥ ४५ ॥
पश्चान्मृदा वेष्टयित्वा शोषयित्वा च धारयेत् ।
शरावसम्पुटस्यान्तस्तत्र मुद्रां प्रदापयेत् ॥ ४६ ॥
लवणापूरिते भाण्डे धारयेत्तच्च सम्पुटम् ।
मुद्रां दत्त्वा शोषयित्वा बहुभिर्गोमयैः पुटेत् ॥ ४७ ॥ गजपुटात् दधिक पुटे चात्र देयम्
ततः शीते समाकृष्टे गन्धं सूतसमं क्षिपेत् ।
घृष्ट्वा च पूर्ववत् खल्वे पुटेद्गजपुटेन च ॥ ४८ ॥ पूर्वोक्तरसैः
स्वाङ्गशीतं ततो नीत्वा गुञ्जायुग्मं प्रयोजयेत् ।
अष्टभिर्मरिचैर्युक्ताः कृष्णात्रययुतोऽथवा ॥ ४९ ॥
विलोक्य देया दोषादीनेकैका रसरक्तिका ।
सर्पिषा मधुना वापि दद्याद्दोषाद्यपेक्षया ॥ ५० ॥
लोकनाथसमं पथ्यं कुर्य्यात् स्वस्थमनाः शुचिः ।
श्लेष्माणं ग्रहणीं कासं श्वासं क्षयमरोचकम् ।
मृगाङ्कोऽयं रसो हन्यात् कृशत्वं बलहीनताम् ॥ ५१ ॥
[हेमगर्भपोटलीरसः]सूतात्पादप्रमाणेन हेम्नः पिष्टीं प्रकल्पयेत्
तयोः स्याद्द्विगुणो गन्धो मर्दयेत्काञ्चनारिणा ॥ ५२ ॥
कृत्वा गोलं क्षिपेन्मूषासम्पुटे मुद्रयेत्ततः ।
पचेद्भूधरयन्त्रेण वासरत्रितयं बुधः ॥ ५३ ॥
तत उद्धृत्य तत्सर्वं दद्याद्गन्धं च तत्समम् ।
मर्दयेदार्द्रकरसैश्चित्रकस्य रसेन च ॥ ५४ ॥
स्थूलपीतवराटीश्च पूरयेत्तेन युक्तितः ।
एतस्मादौषधात् कुर्य्यादष्टमांशेन टङ्कणम् ॥ ५५ ॥
टङ्कणार्द्धं विषं दत्त्वा पिष्ट्वा सेहुण्डदुग्धकैः ।
मुद्रयेत्तेन कल्केन वराटीनां मुखानि च ॥ ५६ ॥

CC0. Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

भाण्डे चूर्णप्रलिप्ते च धृत्वा मुद्रां प्रदापयेत्।
गर्त्ते हस्तोन्मिते धृत्वा पुटेद्गजपुटेन च ॥ ५७ ॥
स्वाङ्गशीतं रसं नीत्वा प्रदद्याल्लोकनाथवत्।
पथ्यं मृगाङ्कवत् देयं त्रिदिनं लवणं त्यजेत् ॥ ५८ ॥
यदा छर्दिर्भवेत्तस्य दद्याच्छिन्नामृतं तदा।
मधुयुक्तं तथा श्लेष्मकोपे दद्याद्गुड़ार्द्रकम् ॥ ५९ ॥
विरेके भर्जिता भङ्गा प्रदेया दधिसंयुता।
जयेत् कासं तथा श्वासं ग्रहणीमरुचिं तथा ॥ ६० ॥
अग्निञ्च कुरुते दीप्तं कफवातं नियच्छति।
हेमगर्भः परो ज्ञेयः रसपोटलिकारसः ॥ ६१ ॥

अथ द्वितीयहेमपोटलीरसः।

रसस्य भागाश्चत्वारस्तावतः कनकस्य च।
तयोश्च पिष्टिकां कृत्वा गन्धो द्वादशभागिकः ॥ ६२ ॥
कुर्य्यात् कज्जलिकां तेषां मुक्ताभागाश्च षोड़श।
चतुर्विंशति शङ्खस्य भागैकं टङ्कणस्य च ॥ ६३ ॥
एकत्र मर्दयेत्सर्वं पक्वनिम्बुकजैः रसैः।
कृत्वा तेषां ततो गोलं मूषासम्पुटके न्यसेत् ॥ ६४ ॥
मुद्रां दत्त्वा ततो हस्तमात्रे गर्त्ते च गोमयैः।
पुटे गजपुटेनैव स्वाङ्गशीतं समुद्धरेत् ॥ ६५ ॥
पिष्ट्वा गुञ्जाचतुर्मानं दद्याद्गव्याज्यसंयुतम्।
एकोनत्रिंशदुन्मानमरिचैः सह दीयते ॥ ६६ ॥
राजते मृण्मये पात्रे काञ्चने चावलेहयेत्।
लोकनाथसमं पथ्यं कुर्य्यात्प्रयतमानसः ॥ ६७ ॥
कासे श्वासे चये वाते कफे ग्रहणिकागदे।
अतीसारे प्रयोक्तव्या पोटली हेमगर्भिका ॥ ६८ ॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

अथ महाज्वराङ्कुशो रसः ।

सौभाग्यं त्रिफला व्योषं तालगन्धरसामृतम् । *प्रस्तं मिट्टी नाली*
प्रत्येकमेकभागं च जैपालं समभागिकम् ॥ ६९ ॥
भृङ्गराजरसेनैव किंशुकस्वरसेन वा ।
यामयुग्मं विमर्द्याथ कार्य्या गुञ्जोपमा वटी ।
अजीर्णकण्टकश्चायं रसराजः स उच्यते ॥ ७० ॥

[महोदधिरसः] शुद्धसूतं विषं गन्धं प्रत्येकं शाणसम्मितम् ।
धूर्त्तवीजं त्रिशाणं स्यात्सर्वेभ्यो द्विगुणा भवेत् ॥ ७१ ॥
हेमाह्वा कारयेदेषां चूर्णं सूक्ष्मं प्रयत्नतः ।
देयज्जम्बीरमज्जाभिश्चूर्णं गुञ्जाद्वयोन्मितम् ॥ ७२ ॥
आर्द्रकस्वरसैर्वापि ज्वरं हन्ति त्रिदोषजम् ।
एकाह्निकं द्व्याह्निकं वा त्र्याह्निकं वा चतुर्थकम् ।
विषमञ्च ज्वरं हन्याद्विख्यातोऽयं ज्वराङ्कुशः ॥ ७३ ॥

अथ अतीसारे आनन्दभैरवो रसः ।

दरदं वत्सनाभञ्च मरिचं टङ्कणं कणाम् । *मिट्टी*
चूर्णयेत्समभागेन रसो ह्यानन्दभैरवः ॥ ७४ ॥
गुञ्जैकं वा द्विगुञ्जं वा बलं ज्ञात्वा प्रयोजयेत् ।
मधुना लेहयेच्चानु कुटजस्य फलं त्वचम् ॥ ७५ ॥
चूर्णितं कर्षमात्रं स्यात् त्रिदोषोत्थातिसारजित् ।
दध्यन्नं दापयेत् पथ्यं गवाज्यं तक्रमेव च ।
पिपासायां जलं शीतं विजया च हिता निशि ॥ ७६ ॥

अथ लघुसूचिकाभरणो रसः ।

विषं पलमितं सूतः शाणिकश्चूर्णयेद् द्वयम् ।
तच्चूर्णं सम्पुटे क्षिप्त्वा काचलिप्तशरावयोः ॥ ७७ ॥
मुद्रां दत्त्वा च संशोष्य ततश्चुल्ल्यां निवेशयेत् ।
वह्निं शनैः शनैः कुर्य्यात् प्रहरद्वयसंख्यया ॥ ७८ ॥

CC0. Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

तत उद्घाट्य तन्मुद्रामुपरिस्थशरावके।
संलग्नो यो भवेद्धूमस्तं गृह्णीयाच्छनैः शनैः ॥ ७९ ॥
वायुस्पर्शो यथा न स्यात् ततः कूप्यां निवेशयेत्।
यावत् सूच्या मुखे लग्नं कूप्या निर्याति भेषजम् ॥ ८० ॥
तावन्मात्रो रसो देयो मूर्च्छिते सान्निपातिनि।
चुरेण प्रच्छिते मूर्ध्नि तदङ्गुल्या च घर्षयेत् ॥ ८१ ॥
रक्तभेषजसम्पर्कात् मूर्च्छितोऽपि हि जीवति।
तथैव सर्पदंष्टस्तु मृतावस्थोऽपि जीवति।
यदा तापो भवेत् तस्य मधुरं तत्र दीयते ॥ ८२ ॥
[जलचूड़ारसः] भस्मसूतसमं गन्धं गन्धात् पादं मनःशिला।
माक्षिकं पिप्पली व्योषं प्रत्येकं शिलया समम् ॥ ८३ ॥
चूर्णयेद्भावयेत् पित्तैर्मत्स्यमायूरसम्भवैः ॥
सप्तधा भावयेच्छुष्कं देयं गुञ्जाद्वयं हितम् ॥ ८४ ॥
तालपर्णीरसञ्चानु पञ्चकोलसृतोऽपि वा।
जलचूड़ारसो नाम सन्निपातं नियच्छति।
जलयोगश्च कर्त्तव्यस्तेन वीर्य्यं भवेद्रसे ॥ ८५ ॥
[पञ्चवक्त्रो रसः] शुद्धं सूतं विषं गन्धं मरिचं टङ्कणं कणाम्।
मर्दयेद्धर्त्तूजैर्द्रावैर्दिनमेकञ्च शोषयेत् ॥ ८६ ॥
पञ्चवक्त्रो रसो नाम द्विगुञ्जः सन्निपातजित्।
अर्कमूलकषायन्तु सत्र्यूषमनुपाययेत् ॥ ८७ ॥
युक्तं दध्योदनं पथ्यं जलयोगञ्च कारयेत्।
रसेनानेन शाम्यन्ति सक्षौद्रेण कफोद्भवाः ॥ ८८ ॥
मध्वार्द्रकरसञ्चानु पिबेदग्निविवृद्धये।
यथेष्टं घृतमांसाशी शक्तो भवति पावकः ॥ ८९ ॥
[अथ उन्मत्तो रसः] रसं गन्धकतुल्यांशं धत्तूरफलजद्रवैः।
मर्दयेद्दिनमेकन्तु तत्तुल्यं त्रिकटुं क्षिपेत् ॥ ९० ॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

उन्मत्ताख्यो रसो नाम्ना नस्ये स्यात् सन्निपातजित्।
निस्त्वक्जैपालवीजञ्च दशनिष्कं विचूर्णयेत्।
मरिचं पिप्पलीसूतं प्रतिनिष्कं हि मिश्रयेत् ॥ ९१ ॥
भाव्यो जम्बीरजैर्द्रावैः सप्ताहं सुप्रयत्नतः।
रसोऽयमञ्जने दत्तः सन्निपातं विनाशयेत् ॥ ९२ ॥
[अथ नाराचरसः] सूतं टङ्कणकं तुल्यं मरिचं सूततुल्यकम्।
गन्धकं पिप्पलीशुण्ठी द्वौ द्वौ भागौ विचूर्णयेत्।
सर्वतुल्यं क्षिपेद् दन्तीवीजं निस्तुषितं भिषक् ॥ ९३ ॥
द्विगुञ्जारेचनं सिद्धं नाराचोऽयं महारसः।
आध्मानमलविष्टम्भमुदावर्त्तञ्च नाशयेत् ॥ ९४ ॥
[इच्छाभेदी रसः] दरदष्टङ्कणं शुण्ठी पिप्पली चैककर्षिका।
हेमाह्वा पलमात्रा स्यात् दन्तीवीजञ्च तत्समम् ॥ ९५ ॥
विचूर्ण्यैकत्र सर्वाणि गोदुग्धेनैव साधयेत्।
त्रिगुञ्जारेचनं दद्याद्विष्टम्भाध्मानरोगिषु ॥ ९६ ॥
[राजमृगाङ्को रसः] भस्मसूतत्रयो भागा भागैकं हेमभस्मकम्।
मृतताम्रस्य भागैकं शिलागन्धकतालकम् ॥ ९७ ॥
प्रतिभागद्वयं शुद्धमेकीकृत्य विचूर्णयेत्।
वराटीः पूरयेत् तेन छागीक्षीरेण टङ्कणम् ॥ ९८ ॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तन्निरोधयेत्।
शुष्कं गजपुटे पक्त्वा चूर्णयेत् स्वाङ्गशीतलम् ॥ ९९ ॥
रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः।
दशपिप्पलिकाक्षौद्रैरेकोनविंशदूषणैः ॥ १०० ॥
सघृतं दापयेत् पथ्यं स्त्रीकोपाग्निश्रमांस्त्यजेत्।
पथ्यं वा लघु मांसानि राजरोगप्रशान्तये ॥ १०१ ॥
[अग्निरसः] शुद्धं सूतं द्विधा गन्धं कुर्य्यात् खल्वेन कज्जलीम्।
तयोः समं तीक्ष्णचूर्णं मर्दयेत् कन्यकाद्रवैः ॥ १०२ ॥

CC0. Gurukul Kangri Collection, Haridwar; Digitized by eGangotri

द्वियामान्ते कृतं गोलं ताम्रपात्रे विनिःक्षिपेत्।
आच्छाद्यैरण्डपत्रेण यामार्द्धेऽत्युष्णता भवेत्॥ १०३॥
धान्यराशौ न्यसेत् पश्चादहोरात्रात् समुद्धरेत्।
संपिष्य गालयेद्वस्त्रे सत्यं वारितरं भवेत्॥ १०४॥
त्रिकटुत्रिफलैलाभिर्जातीफललवङ्गकैः।
नवभागोन्मितैरेतैः समः पूर्वरसो भवेत्॥ १०५॥
संचूर्ण्य लेहयेत् क्षौद्रे भक्ष्यं निष्कद्वयं द्वयम्।
स्वयमग्निरसो नाम्ना क्षयकासनिकृन्तनः॥ १०६॥
[अमृतार्णवरसः] पारदं गन्धकं शुद्धं मृतलोहञ्च टङ्कणम्।
रास्नाविडङ्गत्रिफलादेवदारुकटुत्रयम्॥ १०७॥
अमृतापर्पटक्षौद्रं विश्वं तुल्यांशचूर्णितम्।
त्रिगुञ्जं सर्वकासार्त्तः सेवयेदमृतार्णवम्॥ १०८॥
[सूर्य्यावर्त्तो रसः] सूतार्द्धौ गन्धको मर्द्यौ यामैकं कन्यकाद्रवैः।
द्वयोस्तुल्यं ताम्रपत्रं पूर्वकल्पेन लेपयेत्॥ १०९॥
दिनैकं स्थालिकायन्त्रे पक्वमादाय चूर्णयेत्।
सूर्य्यावर्त्तरसो ह्येष द्विगुञ्जः श्वासजिद्भवेत्॥ ११०॥
[स्वच्छन्दभैरवो रसः] शुद्धं सूतं मृतं लोहं ताप्यं गन्धकतालकम्।
पथ्याग्निमन्थनिर्गुण्डी त्रूषणं टङ्कणं विषम्॥ १११॥
तुल्यांशं मर्दयेत् खल्वे दिनं निर्गुण्डिकाद्रवैः।
मुण्डीद्रावैर्दिनैकन्तु द्विगुञ्जावटकीकृतम्॥ ११२॥
भक्षयेद्वातरोगार्त्तो नाम्ना स्वच्छन्दभैरवम्।
रास्नामृतादेवदारुशुण्ठीवातारिजं शृतम्।
सगुग्गुलं पिबेत्कोष्णमनुपानं सुखावहम्॥ ११३॥
[हंसपोटली रसः] दग्धा कपर्दिकान् पिष्ट्वा त्रूषणं टङ्कणं विषम्।
गन्धकं शुद्धसूतञ्च तुल्यं जम्बीरजैर्द्रवैः॥ ११४॥
मर्दयेत् भक्षयेन्माषं मरिचाज्यं लिहेदनु।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

निहन्ति ग्रहणीरोगं पथ्यं तक्रौदनं हितम् ॥ ११५

[त्रिविक्रमो रसः] मृतं ताम्रमजाक्षीरैः पाच्यं तुल्यैर्गते द्रवे ।
तत्ताम्रं शुद्धसूतञ्च गन्धकञ्च समं समम् ॥ ११६ ॥
निर्गुण्डीस्वरसैर्मर्द्यं दिनं तद्गोलमन्धयेत् ।
यामैकं वालुकायन्त्रे पाच्यं योज्यं द्विगुञ्जकम् ॥ ११७ ॥
वीजपूरकमूलन्तु सजलञ्चानुपानतः ।
रसस्त्रिविक्रमो नाम्ना मासैकेनाश्मरीप्रणुत् ॥ ११८ ॥

[महातालेश्वरो रसः] तारं ताप्यशिलासूतं शुद्धं सैन्धवटङ्कणम् ।
समांशं चूर्णयेत् खल्वे सूताद् द्विगुणगन्धकम् ॥ ११९ ॥
(गन्धतुल्यं मृतं ताम्रं जम्बीरैर्दिनपञ्चकम् ।
मर्द्यं षड्भिः पुटैः पाच्यं भूधरे सम्पुटोदरे ॥ १२० ॥
पुटे पुटे द्रवैर्मर्द्यं सर्वमेतत् तु षट्पलम् ।
द्विपलं मरिचं ताम्रं लोहभस्म चतुःपलम् ॥ १२१ ॥
जम्बीराम्लेन तत् सर्वं दिनं मर्द्यं पुटेल्लघु ।)
त्रिंशदंशं विषं चास्य क्षिप्त्वा सर्वं विचूर्णयेत् ॥ १२२ ॥
माहिषाज्येन संमिश्रं निष्काद्धं भक्षयेत्सदा ।
मध्वाज्यैर्वाकुचीचूर्णं कर्षमात्रं लिहेदनु ।
सर्वं कुष्ठं निहन्त्याशु महातालेश्वरो रसः ॥ १२३ ॥

[कुष्ठकुठारो रसः] भस्म सूतसमं गन्धं मृतायस्ताम्रगुग्गुलुः ।
त्रिफलाश्च महानिम्बश्चित्रकश्च शिलाजतु ॥ १२४ ॥
इत्येतच्चूर्णितं कुर्य्यात् प्रत्येकं भागषोडश ।
चतुःषष्टिकरञ्जस्य वीजं चूर्णं प्रकल्पयेत् ॥ १२५ ॥
चतुःषष्टिमृतं चाभ्रं मध्वाज्याभ्यां विलोडयेत् ।
स्निग्धभाण्डे घृतं खादेत् द्विनिष्कं सर्वकुष्ठनुत् ।
रसः कुष्ठकुठारोऽयं गलकुष्ठनिवारणः ॥ १२६ ॥

[उदयादित्यो रसः] शुद्धसूतं द्विभागन्धं मर्द्यं कन्याद्रवैर्दिनम् ।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

तद्गोलं पिठरीमध्ये ताम्रपात्रेण रोधयेत्॥ १२७॥
सूतकात्त्रिगुणेनैव शुद्धेनाधोमुखेन च।
पार्श्वे भस्म निधायाथ पात्रोर्द्ध्वे गोमयञ्जलम्॥ १२८॥
किञ्चित्किञ्चित्प्रदातव्यं चुल्यां यामद्वयं पचेत्।
चण्डाग्निना तदुद्धृत्य स्वाङ्गशीतं विचूर्णयेत्॥ १२९॥
काष्ठोदुम्बरिकावह्निचिफलाराजवृक्षकम्।
विडङ्गं वाकुचीवीजं क्वाथयेत्तेन भावयेत्॥ १३०॥
दिनैकमुदयादित्यो रसो देयो द्विगुञ्जकः।
विचर्चिकां दद्रुकुष्ठं श्वेतकुष्ठञ्च नाशयेत्॥ १३१॥
अनुपानञ्च कर्त्तव्यं वाकुचीफलचूर्णकम्।
खदिरस्य कषायेण समेन परिपाचितम्॥ १३२॥
त्रिशाणं तद्गवां क्षीरैः क्वाथैर्वा त्रैफलैः पिबेत्।
त्रिदिनान्ते भवेत् स्फोटः सप्ताहाद्वा किलासकम्॥ १३३॥
नीलीं गुञ्जाञ्च कासीसं धत्तूरं हंसपादिकाम्।
सूर्य्यभक्ताञ्च चाङ्गेरीं पिष्ट्वा मूलात् प्रलेपयेत्॥ १३४॥
स्फोटस्थानप्रशान्त्यर्थं सप्तरात्रं पुनः पुनः।
श्वेतकुष्ठं निहन्त्याशु साध्यासाध्यं न संशयः॥ १३५॥
अपरः श्वित्रलेपोऽपि कथ्यतेऽत्र भिषग्वतः।
गुञ्जाफलानां चूर्णं च लेपितं श्वेतकुष्ठनुत्।
शिलाया मार्गभस्मापि लिप्ता श्वित्रं विनाशयेत्॥ १३६॥
[अथ सर्वेश्वरो रसः] शुद्धं सूतं चतुर्गन्धं पलं यामं विचूर्णयेत्।
मृतताम्राभ्रलोहानां दरदञ्च पलं पलम्॥ १३७॥
सुवर्णं रजतं चैव प्रत्येकं दशनिष्ककम्।
माषैकं मृतवज्रं च तालसत्वं पलद्वयम्॥ १३८॥
जम्बीरोन्मत्तवासाभिः स्नुह्यर्कविषमुष्टिभिः।
मर्द्यं हयारिजैर्द्रावैः प्रत्येकेन दिनं दिनम्॥ १३९॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

एवं सप्तदिनं मर्द्यं तद्गोलं वस्त्रवेष्टितम् ।
वालुकायन्त्रगं स्वेद्यं त्रिदिनं लघुवह्निना ॥ १४० ॥
आदाय चूर्णयेत् श्लक्ष्णं पलैकं योजयेद्विषम् ।
द्विपलं पिप्पलीचूर्णं इत्थं सर्वेश्वरो रसः ॥ १४१ ॥
द्विगुञ्जो लिह्यते चौद्रैः सुप्तिमण्डलकुष्ठनुत् ।
वाकुचीदेवकाष्ठञ्च कर्षमात्रं सुचूर्णयेत् ।
लिहेदैरण्डतैलाक्तमनुपानं सुखावहम् ॥ १४२ ॥
[स्वर्णक्षीरीरसः] हेमाह्वां पञ्चपलिकां चिप्त्वा तक्रघटे पचेत् ।
तक्रे जीर्णे समुद्धृत्य पुनः चीरघटे पचेत् ॥ १४३ ॥
चीरे जीर्णे समुद्धृत्य चालयित्वा विशोषयेत् ।
तच्चूर्णितं पञ्चपलं मरिचानां पलद्वयम् ॥ १४४ ॥
पलैकं मूर्च्छितं सूतमेकीकृत्वा तु भक्षयेत् ।
निष्कैकं सुप्तिकुष्ठार्त्तः स्वर्णक्षीरीरसो ह्ययम् ॥ १४५ ॥
[मेहबद्धो रसः] भस्म सूतं मृतं कान्तं मुण्डभस्म शिलाजतु ।
शुद्धं ताप्यं शिलाव्योषं त्रिफलां कोलबीजकम् ॥ १४६ ॥
कपित्थरजनीचूर्णं भृङ्गराजेन भावयेत् ।
विंशद्वारं विशोष्याथ मधुयुक्तं लिहेत् सदा ॥ १४७ ॥
निष्कमात्रो हरेन्मेहान् मेहबद्धो रसो महान् ।
महानिम्बस्य वीजानि पिष्ट्वा षट्सम्मितानि च ॥ १४८ ॥
पलं तण्डुलतोयेन घृतनिष्कद्वयेन च ।
एकीकृत्य पिबेच्चानु हन्ति मेहं चिरन्तनम् ॥ १४९ ॥
[अथ वह्निरसः] चतुःसूतस्य गन्धाष्टौ रजनी त्रिफला शिवा ।
प्रत्येकञ्च द्विभागं स्यात् त्रिवृज्जैपालचित्रकम् ॥ १५० ॥
प्रत्येकञ्च त्रिभागं स्यात् त्र्यूषं दन्ती च जीरकम् ।
प्रत्येकमष्टभागं स्यादेकीकृत्य विचूर्णयेत् ॥ १५१ ॥
जयन्तीस्नुक्पयोभृङ्गवह्निवातारितैलकैः ।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

प्रत्येकेन क्रमाद्भाव्यं सप्तवारं पृथक् पृथक् ॥ १५२ ॥
महावह्निरसो नाम निष्कमुष्णजलैः पिबेत्।
तक्र विरेचनं भवेत्तेन नक्तभक्तं ससैन्धवम् ॥ १५३ ॥
दिनान्ते दापयेत् पथ्यं वर्जयेच्छीतलं जलम्।
सर्वोदरहरः प्रोक्तो मूढ़वातहरः परः ॥ १५४ ॥
[विद्याधरो रसः] गन्धकं तालकं ताप्यं मृतताम्रं मनःशिला।
शुद्धं सूतञ्च तुल्यांशं मर्दयेद्भावयेद्दिनम् ॥ १५५ ॥
पिप्पल्यास्तु कषायेण वज्रीक्षीरेण भावयेत्।
निष्कार्द्धं भक्षयेत् क्षौद्रैर्गुल्मं प्लीहादिकं जयेत्।
रसो विद्याधरो नाम गोमूत्रञ्च पिबेदनु ॥ १५६ ॥
[त्रिनेत्रो रसः] टङ्कणं हारिणं शृङ्गं स्वर्णं शुल्वं मृतं रसम्।
दिनैकमार्द्रकद्रावैर्मर्द्यं रुद्ध्वा पुटे पचेत् ॥ १५७ ॥
त्रिनेत्राख्यो रसः सोऽयं माषं मध्वाज्यकैर्लिहेत्।
सैन्धवं जीरकं हिङ्गु मध्वाज्याभ्यां लिहेदनु।
पङ्क्तिशूलहरः ख्यातो मासमात्रान्न संशयः ॥ १५८ ॥
[शूलगजकेसरी रसः]शुद्धं सूतं द्विधा गन्धं यामैकं मर्दयेद्दृढम्
द्वयोस्तुल्यं शुद्धताम्रं संपुटं तन्निरोधयेत् ॥ १५९ ॥
ऊर्द्ध्वाधो लवणं दत्त्वा मृद्भाण्डे धारयेद्भिषक्।
ततो गजपुटे पक्त्वा स्वाङ्गशीतं समुद्धरेत् ॥ १६० ॥
संपुटं चूर्णयेत् सूक्ष्मं पर्णखण्डे द्विगुञ्जकम्।
भक्षयेत् सर्वशूलार्त्तो हिङ्गुशुण्ठी च जीरकम् ॥ १६१ ॥
सौवर्चलं विडङ्गानि कर्षमुष्णजलैः पिबेत्।
असाध्यं नाशयेच्छूलं रसः स्यात् शूलकेसरी ॥ १६२ ॥
[अग्नितुण्डावटीरसः]शुद्धं सूतं विषं गन्धमजमोदां फलत्रयम्।
स्वर्जक्षारयवक्षारे वह्निसैन्धवजीरकम् ॥ १६३ ॥
सौवर्चलं विडङ्गानि सामुद्रं त्र्यूषणं समम्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

विषमुष्टिं सर्वतुल्यं जम्बीराम्लेन मर्दयेत् ॥ १६४ ॥
मरिचाभां वटीं खादेद्वह्निमान्द्यप्रशान्तये ।
पथ्या शुण्ठी गुड़ञ्चानु पलार्द्धं भक्षयेत् सदा ।
अग्नितुण्डा वटी ख्याता सर्वरोगकुलान्तकृत् ॥ १६५ ॥

[अजीर्णकण्टको रसः] शुद्धसूतं विषं गन्धं समं मर्द्य विचूर्णयेत् ।
मरिचं सर्वतुल्यांशं कण्टकार्य्याः फलद्रवैः ॥ १६६ ॥
मर्दयेद्भावयेत्सर्वमेकविंशतिवारकम् ।
वटीगुञ्जात्रयं खादेत् सर्वाजीर्णप्रशान्तये ।
अजीर्णकण्टकः सोऽयं रसो हन्ति विसूचिकाम् ॥१६७॥

[मन्थानभैरवो रसः] मृतं सूतं मृतं ताम्रं हिङ्गुपुष्करमूलकम् ।
सैन्धवं गन्धकं तालं कटुकीं चूर्णयेत् समम् ॥ १६८ ॥
पुनर्नवादेवदालीनिर्गुण्डीतण्डुलीयकैः ।
तिक्तकोशातकीद्रावैर्दिनैकं मर्दयेद् दृढ़म् ॥ १६९ ॥
माषमात्रं लिहेत् क्षौद्रैः रसो मन्थानभैरवः ।
कफरोगप्रशान्त्यर्थं निम्बक्वाथं पिबेदनु ॥ १७० ॥

[वातनाशनो रसः] सूतहाटकवज्राणि ताम्रं लोहञ्च माक्षिकम् ।
तालं नीलाञ्जनं तुल्यमभ्रिफेनं समांशकम् ॥ १७१ ॥
पञ्चानां लवणानाञ्च भागमेकं विमर्दयेत् ।
वज्रीक्षीरैर्दिनैकन्तु रुद्ध्वाहो भूधरे पचेत् ॥ १७२ ॥
माषैकमार्द्रकद्रावैर्लेहनाद्वातनाशनम् ।
पिप्पलीमूलकक्वाथं सकृष्णमनुपाययेत् ।
सर्वान् वातविकारांस्तु निहन्त्याक्षेपकादिकम् ॥ १७३ ॥

[कनकसुन्दरो रसः] कनकस्याष्टशाणाः स्युः सूतो द्वादशभिर्मतः
गन्धोऽपि द्वादश प्रोक्तः ताम्रं शाणद्वयोन्मितम् ॥१७४॥
अभ्रकं स्याच्चतुःशाणं माक्षिकञ्च द्विशाणिकम् ।
वं... द्विशाणः सौवीरं त्रिशाणं लोहमष्टकम् ॥१७५॥

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

विषं त्रिशाणिकं कृत्वा लाङ्गली पलसम्मिता।
मर्दयेद् दिनमेकं तु रसैरम्लफलोद्भवैः॥ १७६॥
दद्यान्मृदुपुटं वह्नौ ततः सूक्ष्मं विचूर्णयेत्।
माषमात्रो रसो देयः सन्निपाते सुदारुणे॥ १७७॥
आर्द्रकस्वरसेनैव रसोनस्वरसेन वा।
किलासं सर्वकुष्ठानि विसर्पञ्च भगन्दरम्।
ज्वराङ्कुरमजीर्णञ्च जयेद्रोगहरो रसः॥ १७८॥

अथ सन्निपातभैरवो रसः।

रसो गन्धस्त्रिभिः कर्षैः कुर्य्यात् कज्जलिकान्तयोः।
ताम्रतारारवङ्गा हि सारस्यैकैककार्षिकाः॥ १७९॥
शिग्रुज्वालामुखीशुण्ठीविल्वेभ्यस्तण्डुलीयकात्।
प्रत्येकं स्वरसैः कुर्य्याद् याममेकं विमर्दयेत्॥ १८०॥
कृत्वा गोलं वृतं वस्त्रैर्लवणापूरितैन्यसेत्।
काचभाण्डे ततः स्थाल्यां काचकूपीं निवेशयेत्॥१८१॥
वालुकाभिः प्रपूर्य्याथ वह्नौ यामद्वयं भवेत्।
तस्मादुद्धृत्य तं गोलं चूर्णयित्वा विमिश्रयेत्॥ १८२॥
प्रवालचूर्णकर्षेण शाणमात्रविषेण च।
कृष्णसर्पस्य गरलैर्द्दिवेलं भावयेत् तथा॥ १८३॥
तगरं मुषली मांसी हेमाह्वा वेतसः कणा।
नीलिनीपत्रकञ्चैलाश्वित्रकस्य कुबेरकः॥ १८४॥
शतपुष्पा देवदाली धत्तूरागस्त्यमुण्डिका।
मधूकजाती मधुना रसैरेषां विमर्दयेत्॥ १८५॥
प्रत्येकमेकवेलञ्च ततः संशोष्य धारयेत्।
वीजपूरार्द्रकद्रावैर्मरिचैः षोड़शोन्मितैः॥ १८६॥
रसो द्विगुञ्जप्रमितः सन्निपातेषु दीयते।
प्रसिद्धोऽयं रसो नाम्ना सन्निपातस्य भैरवः॥ १८७॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

[ग्रहणीकपाटः] तारमौक्तिकहेमानि सारश्चैकैकभागिकाः।
द्विभागो गन्धकः सूतस्त्रिभागो मर्दयेदिमान्॥ १८८॥
कपित्थस्वरसैर्गाढ़ं मृगशृङ्गे ततः क्षिपेत्।
पुटेन्मध्यपुटेनैव तत उद्धृत्य मर्दयेत्॥ १८९॥
बलारसैः सप्तवेलमपामार्गरसैस्त्रिधा।
लोध्रप्रतिविषामुस्तधातकीन्द्रयवाम्बुताः॥ १९०॥
प्रत्येकमेतत् स्वरसैः भावना स्यात् त्रिधा त्रिधा।
माषमात्रो रसो देयो मधुना मरिचैस्तथा॥ १९१॥
हन्यात् सर्वानतीसारान् ग्रहणीं सर्वजामपि।
कपाटो ग्रहणीरोगे रसोऽयं वह्निदीपनः॥ १९२॥
[ग्रहणीवज्रकपाटः] मृतसूताभ्रकं गन्धं यवक्षारं सटङ्कणम्।
अग्निमन्थं वचां दद्यात् सूततुल्यानिमान् सुधीः॥ १९३॥
ततो जयन्तीजम्बीरभृङ्गद्रावैर्विमर्दयेत्।
त्रिवासरं ततो गोलं कृत्वा संशोष्य धारयेत्॥ १९४॥
लोहपात्रे शरावञ्च दत्त्वोपरि विमुद्रयेत्।
अधो वह्निं शनैः कुर्य्याद् यामार्द्धं तत उद्धरेत्॥ १९५॥
रसतुल्यां प्रतिविषां दद्यान्मोचरसं तथा।
कपित्थविजयाद्रावैर्भावयेत् सप्तधा भिषक्॥ १९६॥
धातकीन्द्रयवामुस्तलोध्रं विल्वं गुड़ूचिका।
एतद्रसैर्भावयित्वा वेलैकैकं च शोषयेत्॥ १९७॥
रसं वज्रकपाटाख्यं माणिकं मधुना लिहेत्।
वह्निं शुण्ठीं विड़ं विल्वं लवणं चूर्णयेत् समम्।
पिबेदुष्णाम्बुना चानु सर्वजां ग्रहणीं जयेत्॥ १९८॥
[मदनकामदेवो रसः] तारं वज्रं सुवर्णञ्च ताम्रसूतकगन्धकम्।
लोहं क्रमविवृद्धानि कुर्य्यादेतानि मात्रया॥ १९९॥
विमर्द्य कन्यकाद्रावैर्न्यसेत् काचमये घटे।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

त्रिमुद्रापिठरीमध्ये धारयेत् सैन्धवाहते ॥ २०० ॥
पिठरीं मुद्रयेत् सम्यक् ततश्चुल्यां निवेशयेत्।
वह्निं शनैः शनैः कुर्य्याद्दिनैकं तत उद्धरेत् ॥ २०१ ॥
स्वाङ्गशीतञ्च संचूर्ण्य भावयेदर्कदुग्धकैः।
अश्वगन्धा च काकोली वानरी मुशली चुरा ॥ २०२ ॥
त्रित्रिवेलं रसैरासां शतावर्य्याश्च भावयेत्।
पद्मकन्दकसेरूणां रसैः कासस्य भावयेत् ॥ २०३ ॥
कस्तूरीव्योषकर्पूरकङ्कोलैलालवङ्गकम्।
सर्वचूर्णादष्टमांशं एतच्चूर्णं विमिश्रयेत् ॥ २०४ ॥
सर्वैः समां शर्कराञ्च दत्त्वा शाणोन्मितां पिबेत्।
गोदुग्धद्विपलेनैव मधुराहारसेवकः ॥ २०५ ॥
अस्य प्रभावात् सौन्दर्य्यं बलं तेजोऽभिवर्द्धते।
तरुणी रमयेद्बह्वीर्न च हानिः प्रजायते ॥ २०६ ॥

अथ कन्दर्पसुन्दरो नाम रसः।

सूतो वज्रमहिर्मुक्ता तारहेमासिताभ्रकम्।
रसैः कर्षांशिकानेतान् मर्दयेद्दिरिमेदजैः ॥ २०७ ॥
प्रवालचूर्णगन्धश्च द्विद्विकर्षैर्विमिश्रयेत्।
ततोऽश्वगन्धास्वरसैर्विमर्द्य मृगशृङ्गके ॥ २०८ ॥
क्षिप्त्वा मृदुपुटे पक्त्वा भावयेद्वातकीरसैः।
काकोलीमधुकं मांसी बलात्रयविशेङ्गुदम् ॥ २०९ ॥
द्राक्षापिप्पलवन्दाकं बाणः पर्णीचतुष्टयम्।
परुषकं कसेरुश्च मधुकं वानरी तथा ॥ २१० ॥
भावयित्वा रसैरेषां शोषयित्वा विचूर्णयेत्।
एलात्वक्पत्रकं मांसी लवङ्गागुरुकेसरम् ॥ २११ ॥
मुस्तं मृगमदः कर्ष्णजलं चन्द्रश्च मिश्रयेत्।
एतच्चूर्णैः शाणमितैः रसं कन्दर्पसुन्दरम् ॥ २१२ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

खादेत् शाणमितं रात्रौ सिता धात्री विदारिका।
एतासां कर्षचूर्णेन सर्पिःकर्षेण संयुतम् ॥ २१३ ॥
तस्यानु द्विपलं क्षीरं पिबेत् सुखितमानसः।
रमणीं रमयेद्वह्वीर्न हानिं क्वापि गच्छति ॥ २१४ ॥
[लोहरसायनम्] शुद्धे रसेन्द्रभागैके द्विभागं शुद्धगन्धकम्।
क्षिपेत्कज्जलिकां कुर्य्यात् तत्र तीक्ष्णभवं रजः ॥ २१५ ॥
क्षिप्त्वा कज्जलिकातुल्यं प्रहरैकं विमर्दयेत्।
ततः कन्याद्रवैर्घर्मे त्रिदिनं परिमर्दयेत् ॥ २१६ ॥
ततः सञ्जायते तस्य सोष्मो धूमोद्गमो महान्।
अथ तं पिण्डितं कृत्वा ताम्रपात्रे निधापयेत् ॥ २१७ ॥
मध्ये धान्यकुसूलस्य त्रिदिनं धारयेद्बुधः।
उद्धृत्य धारयेत् खल्वे क्षिप्त्वा घर्मे निधाय च ॥ २१८ ॥
रसैः कुठारच्छिन्नायास्त्रिवेलं परिभावयेत्।
संशोष्य घर्मे क्वाथैश्च भावयेत् त्रिकटोस्त्रिशः ॥ २१९ ॥
वासामृताचित्रकानां रसैर्भाव्यं पृथक् त्रिशः।
लोहपात्रे ततः क्षिप्त्वा भावयेत् त्रिफलाजलैः ॥ २२० ॥
निर्गुण्डीदाडिमत्वग्भिर्वासाभृङ्गकुरण्टकैः।
पलाशकदलीद्रावैर्बीजकस्य शृतेन च ॥ २२१ ॥
नीलिकालम्बुषाद्रावैर्बब्बूलफलिकारसैः।
भावयेत्त्रिस्त्रिवेलञ्च ततो नागबलारसैः ॥ २२२ ॥
शतावरीगोक्षुरभिः पातालगरुडीद्रवैः।
त्रिस्त्रिवेलं यथालाभं भावयेदेभिरौषधैः ॥ २२३ ॥
ततः प्रातर्लिहेत् क्षौद्रमधुभ्यां कोलमात्रकम्।
पलमात्रं बलाक्वाथं पिबेदस्यानुपानकम् ॥ २२४ ॥
मासत्रयं शीलितं स्याद्वलीपलितनाशनम्।
मन्दाग्निं श्वासकासौ च पाण्डुतां कफमारुतौ ॥ २२५ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पिप्पलीमधुसंयुक्तं हन्यादेतन्न संशयः।
वातास्रं मूत्रदोषांश्च ग्रहणीं गुदजां रुजम्॥ २२६॥
अण्डवृद्धिं जयेदेतच्छिलासत्वमधुप्लुतम्।
बलवर्णकरं वृष्यमायुष्यं परमं स्मृतम्॥ २२७॥
जयेत् सर्वामयान् कालादिदं लोहरसायनम्।
अन्वेष्यौषधमेतस्मिन् प्रदद्यात् कोलमात्रकम्॥ २२८॥
कूष्माण्डं तिलतैलञ्च माषान्नं राजिकां तथा।
मद्यमम्लरसञ्चैव त्यजेल्लोहस्य सेवकः॥ २२९॥

इति श्रीदामोदरसूनुना शार्ङ्गधरेण विरचिते
चिकित्सास्थाने रसकल्पनाविधिरध्यायः।
इति मध्यमखण्डः।

---

## अथ उत्तरखण्डः।

### प्रथमोऽध्यायः।

स्नेहश्चतुर्विधः प्रोक्तो घृतं तैलं वसा तथा।
मज्जा च तं पिबेन्मर्त्यः किञ्चिदभ्युदिते रवौ॥ १॥
स्थावरो जङ्गमश्चैव द्वियोनिः स्नेह उच्यते।
तिलतैलं स्थावरेषु जङ्गमेषु घृतं वरम्॥ २॥
द्वाभ्यां त्रिभिश्चतुर्भिस्तु यमकस्त्रिवृतो महान्।
पिबेत् त्र्यहं चतुरहं पञ्चाहं षड़हं तथा॥ ३॥
सप्तरात्रात्परं स्नेहः सात्मो भवति सेवितः।
दोषकालाग्निवयसां बलं दृष्ट्वा प्रयोजयेत्॥ ४॥
हीनाञ्च मध्यमां ज्येष्ठां मात्रां स्नेहस्य बुद्धिमान्।
अमात्रया तथाऽकाले मिथ्याहारविहारतः॥ ५॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

स्नेहः करोति शोफार्शस्तन्द्रा निद्रा विसंज्ञिता ।
देया दीप्ताग्नये मात्रा स्नेहस्य पलसम्मिता ॥ ६ ॥
मध्यमा च त्रिकर्षा स्याज्जघन्या च द्विकार्षिकी ।
अथवा स्नेहमात्राः स्युस्तिस्रोऽन्याः सर्वसम्मताः ॥ ७ ॥
अहोरात्रेण महतीर्जीर्य्यन्त्यङ्गा तु मध्यमा ।
जघन्या तु दिनार्द्धेन सा विज्ञेया सुखावहा ॥ ८ ॥
अल्पा स्याद्दीपनी वृष्या स्वल्पदोषे च पूजिता ।
मध्यमा स्नेहनी ज्ञेया बृंहणी भ्रमहारिणी ॥ ९ ॥
ज्येष्ठा कुष्ठविषोन्मादग्रहापस्मारनाशिनी ।
केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम् ॥ १० ॥
पेयं बहुकफे वाऽपि व्योषक्षारसमन्वितम् ।
रूक्षक्षतविषार्त्तानां वातपित्तविकारिणाम् ॥ ११ ॥
हीनमेधास्मृतीनाञ्च सर्पिःपानं प्रशस्यते ।
कृमिकोष्ठानिलाविष्टाः प्रवृद्धकफमेदसः ॥ १२ ॥
पिबेयुस्तैलसात्म्याये तैलं दार्ढ्यार्थिनस्तु ये ।
व्यायामकर्षिताः शुष्करेतोरक्ता महारुजः ॥ १३ ॥
महाग्निमारुतप्राणाः वसायोग्या नराः स्मृताः ।
क्रूराशयाः क्लेशसहा वातार्त्ता दीप्तवह्नयः ॥ १४ ॥
मज्जानमापिबेयुस्ते सर्पिर्वा सर्वतो हितम् ।
शीतकाले दिवा स्नेहमुष्णकाले पिबेन्निशि ॥ १५ ॥
वातपित्ताधिके रात्रौ वातश्लेष्माधिके दिवा ।
नस्याभ्यञ्जनगण्डूषमूर्धकर्णाक्षितर्पणे ॥ १६ ॥
तैलं घृतं वा युञ्जीत दृष्ट्वा दोषबलाबलम् ।
घृते कोष्णं जलं पेयं तैले यूषः प्रशस्यते ॥ १७ ॥
वसा मज्जोः पिबेन्मण्डमनुपानं सुखावहम् ।
स्नेहद्विषः शिशून् वृद्धान् सुकुमारान् कृशानपि ॥ १८ ॥

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

तृष्णाकुलानुष्णकाले सह भक्तेन पाययेत्।
सर्पिष्मती बहुतिला यवागूः स्वल्पतण्डुला ॥ १९ ॥
सुखोष्णसेव्यमाना तु सद्यः स्नेहनकारिणी।
शर्कराचूर्णसंसृष्टे दोहनस्थे घृते तु गाम् ॥ २० ॥
दुग्ध्वा क्षीरं पिबेद्रूक्षः सद्यः स्नेहनमुच्यते।
मिथ्याचाराद्बहुत्वाद्वा यस्य स्नेहो न जीर्य्यति ॥ २१ ॥
विष्टभ्य चाप्यजीर्य्यंत वारिणोष्णेन वामयेत्।
स्नेहस्याजीर्णशङ्कायां पिबेदुष्णोदकं नरः ॥ २२ ॥
तदोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा।
स्नेहेन पैत्तिकस्याग्निर्यदा तीक्ष्णतरीकृतः ॥ २३ ॥
तदास्योदीरयेत् तृष्णां विषमान्तस्य पाययेत्।
शीतं जलं वामयेच्च पिपासा तेन शाम्यति ॥ २४ ॥
अजीर्णी वर्जयेत् स्नेहमुदरी तरुणज्वरी।
दुर्बलोऽरोचकी स्थूलो मूर्च्छार्त्तो मदपीड़ितः ॥ २५ ॥
दत्तवस्तिर्विरिक्तश्च वान्तस्तृष्णाश्रमान्वितः।
अकालप्रसवा नारी दुर्दिने च विवर्जयेत् ॥ २६ ॥
स्वेद्य संशोध्य मद्यस्त्रीव्यायामासक्त-चित्तकाः।
वृद्धबालकृशा रूक्षाः क्षीणास्राः क्षीणरेतसः ॥ २७ ॥
वातार्त्तास्तिमिरार्त्ता ये तेषां स्नेहनमुत्तमम्।
वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहितम् ॥ २८ ॥
मृदुस्निग्धाङ्गताग्लानिस्नेहद्वेषोऽथ लाघवम्।
विमलेन्द्रियता सम्यक् स्निग्धे रूक्षे विपर्य्ययः ॥ २९ ॥
भक्तद्वेषो मुखस्रावो गुदे दाहः प्रवाहिका।
तन्द्रातिसारः पाण्डुत्वं भृशं स्निग्धस्य लक्षणम् ॥ ३० ॥
रूक्षस्य स्नेहनं स्नेहैरतिस्निग्धस्य रूक्षणम्।
श्यामाकचणकाद्यैश्च तक्रपिण्याकशक्तुभिः ॥ ३१ ॥

मॉ

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

दीप्ताग्निः शुद्धकोष्ठश्च पुष्टधातुर्दृढेन्द्रियः।
निर्जरो बलवर्णाढ्यः स्नेहसेवी भवेन्नरः॥ ३२॥
स्नेही व्यायामसंशीतवेगघातप्रजागरान्।
दिवास्वप्नमभिष्यन्दि रूक्षान्नञ्च विवर्जयेत्॥ ३३॥
इति स्नेहविधिरध्यायः समाप्तः।

---

अथ द्वितीयोऽध्यायः।

[अथ स्वेदविधिः] स्वेदश्चतुर्विधः प्रोक्तस्तापोष्मस्वेदसंज्ञितौ।
उपनाहो द्रवः स्वेदः सर्वे वातार्त्तिहारिणः॥ १॥
स्वेदौ तापोष्मजौ प्रायः श्लेष्मजौ समुदीरितौ।
उपनाहस्तु वातघ्नः पित्तसङ्गे द्रवो हितः॥ २॥
महाबले महाव्याधौ शीते स्वेदो महान् स्मृतः।
दुर्बले दुर्बलः स्वेदो मध्ये मध्यतमो मतः॥ ३॥
बलासे रूक्षणः स्वेदो रूक्षस्निग्धं कफानिले।
कफमेदोवृते वाते कोष्णं गेहं रवेः करात्॥ ४॥
नियुद्धं मार्गगमनं गुरुप्रावरणं भुवम्।
चिन्ताव्यायामभारांश्च सेवेतामयमुक्तये॥ ५॥
येषां नस्यं विधातव्यं वस्तिश्चापि हि देहिनाम्।
शोधनीयाश्च ये केचित् पूर्वं स्वेद्याश्च ते मताः॥ ६॥
स्वेद्याः पूर्वं त्रयः प्लीहभगन्दर्य्यर्शसस्तथा।
अश्मर्य्याः चातुरो जन्तुः शमयेत् शस्त्रकर्मणा॥ ७॥
पश्चात् स्वेद्या गते शल्ये मूढगर्भगदे तथा।
काले प्रजाताकाले वा पश्चात् स्वेद्या नितम्बिनी॥ ८॥
सर्वान् स्वेद्यान्निवाते च जीर्णाहारे च कारयेत्।
स्वेदाज्जातुस्थिता दोषाः स्नेहक्लिन्नस्य देहिनः॥ ९॥
द्रवत्वं प्राप्य कोष्ठान्तर्गत्वा यान्ति विरिक्तताम्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

स्त्रियमाणशरीरस्य हृदयं शीतलैः स्पृशेत् ॥ १० ॥
स्नेहाभ्यक्तशरीरस्य शीतैराच्छाद्य चक्षुषी।
अजीर्णी दुर्बलो मेही क्षतक्षीणः पिपासितः ॥ ११ ॥
अतिसारी रक्तपित्ती पाण्डुरोगी तथोदरी।
मदार्त्तो गर्भिणी चैव न हि स्वेद्या विजानता ॥ १२ ॥
एतानपि मृदुस्वेदैः स्वेदसाध्यानुपाचरेत्।
मृदुस्वेदं प्रयुञ्जीत तथा हृन्मुष्कदृष्टिषु ॥ १३ ॥
अतिस्वेदात् सन्धिपीड़ा दाहतृष्णाक्लमभ्रमाः।
पित्तासृक् पिड़िका कोपस्तत्र शीतैरुपाचरेत् ॥ १४ ॥
तेषु तापाभिधः स्वेदो वालुकावस्त्रपाणिभिः।
कपालकन्दुकाङ्गारैर्यथायोग्यं प्रयुज्यते ॥ १५ ॥
ऊष्मस्वेदः प्रयोक्तव्यो लोहपिण्डेष्टकाश्मभिः।
प्रतप्तैरम्लसिक्तैश्च काये वस्त्राववेष्टिते ॥ १६ ॥
अथवा वातनिर्णाशिद्रव्यक्वाथरसादिभिः।
उष्णैर्घटं पूरयित्वा पार्श्वे छिद्रं विधाय च ॥ १७ ॥
विमुद्रास्यं विषाणाच्च धातुजां काष्ठजामुत।
षड़ङ्गुलास्यां गोपुच्छां नाड़ीं युञ्ज्याद् द्विहस्तिकाम् ॥१८॥
सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतम्।
हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणम् ॥ १९ ॥
पुरुषायाममात्रं वा भूमिमुत्कीर्य्य खादिरैः।
काष्ठैर्दग्ध्वा तथाभ्युक्ष्य क्षीरधान्याम्लवारिभिः ॥ २० ॥
वातघ्नपत्रैराच्छाद्य शयानं स्वेदयेन्नरम्।
एवं माषादिभिः स्विन्नैः शयानं स्वेदमाचरेत् ॥ २१ ॥
तथोपनाहस्वेदञ्च कुर्य्याद्वातहरौषधैः।
प्रदिह्य देहं वातार्त्तं क्षीरमांसरसान्वितैः ॥ २२ ॥
अम्लपिष्टैः सलवणैः सुखोष्णैः स्नेहसंयुतैः।

प्रदिह्य यस्मिन् वाताद्यपहनृतः ... स्विन्नं ... प्रलिप्य ...

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

(महाशाल्वणस्वेदः)

उतग्राम्यानूपमांसैर्जीवनीयगणेन च ॥ २३ ॥
दधिसौवीरकक्षीरैर्वीरतर्वादिना तथा।
कुलत्थमाष गोधूमैरतसीतिलसर्षपैः ॥ २४ ॥
शतपुष्पादेवदारुशेफालीस्थूलजीरकैः। स्माल कलौंजी
एरण्डमूलबीजैश्च रास्नामूलकशिग्रुभिः ॥ २५ ॥
मिशाकृष्णाकुठेरैश्च लवणैरम्लसंयुतैः। प्याजबीज
प्रसारण्यश्च गन्धाभ्यां बलाभिर्दशमूलकैः ॥ २६ ॥
गुडूच्या वानरीबीजैः यथालाभं समाहृतैः।
चुर्णैः स्विन्नैश्च वस्त्रेण बद्धैः संस्वेदयेन्नरम् ॥ २७ ॥
महाशाल्वणसंज्ञोऽयं योगः सर्वानिलार्त्तिहृत्।
द्रवस्वेदस्तु वातघ्न द्रव्यक्काथेन पूरितम् ॥ २८ ॥
कटाहं कोष्ठकं वाऽपि सूपविष्टोऽवगाहयेत्।
नाभेः षड़ङ्गुलं यावन्मग्नः क्वाथस्य धारया ॥ २९ ॥
कोष्णया स्कन्धयोः सिक्तः तिष्ठेत् स्निग्धतनुर्नरः।
एवं तैलेन दुग्धेन सर्पिषा स्वेदयेन्नरम् ॥ ३० ॥
एकान्तरो द्व्यन्तरो वा स्नेहयुक्तोऽवगाहने।
शिरामुखैर्लोमकूपैर्धमनीभिश्च तर्पयेत् ॥ ३१ ॥
शरीरे बलमाधत्ते युक्तः स्नेहोऽवगाहने।
जलसिक्तस्य वर्द्धन्ते यथा मूलेऽङ्कुरास्तरोः ॥ ३२ ॥
तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते।
नातः परतरः कश्चिदुपायो वातनाशनः ॥ ३३ ॥
शीतशूलाद्युपरमे स्तम्भगौरवनिग्रहे।
दीप्ताग्नौ मार्दवे जाते स्वेदनाद्विरतिर्मता ॥ ३४ ॥
सम्यक् स्विन्नं विमृदितं स्नातमुष्णाम्बुभिः शनैः।
भोजयेच्चानभिष्यन्दि व्यायामञ्च न कारयेत् ॥ ३५ ॥
इति श्रीदामोदरसूनुना शार्ङ्गधरेण विरचिता स्वेदविधिः।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

## अथ तृतीयोऽध्यायः।

[वमनविधिः] शरत्काले वसन्ते च प्रावृट्काले च देहिनाम्।
वमनं रेचनं चैव कारयेत् कुशलो भिषक्॥ १॥
बलवन्तं कफव्याप्तं हृल्लासादिनिपीड़ितम्।
तथा वमनसात्म्यश्च धीरचित्तश्च वामयेत्॥ २॥
विषदोषे स्तन्यरोगे मन्देऽग्नौ श्लीपदेऽर्बुदे।
हृद्रोगे कुष्ठवीसर्पे मेहाजीर्णभ्रमेषु च॥ ३॥
विदारिकापचीकासश्वासपीनसवृद्धिषु।
अपस्मारे ज्वरोन्मादे तथा रक्तातिसारिषु॥ ४॥
नासाताल्वोष्ठपाकेषु कर्णस्रावे द्विजिह्वके।
गलशुण्ड्यामतिसारे पित्तश्लेष्मगदे तथा॥ ५॥
मेदोगदेऽरुचौ चैव वमनं कारयेद्भिषक्।
न वामनीयस्तिमिरी न गुल्मी नोदरी कृशः॥ ६॥
नातिवृद्धो गर्भिणी च न स्थूलो न क्षतातुरः।
मदार्त्तो बालको रूक्षः क्षुधितश्चातिकृच्छितः॥ ७॥
उदावर्त्त्यूर्द्ध्वरक्ती च दुश्छर्दिः केवलानिली।
पाण्डुरोगी कृमिव्याप्तः पठनात् स्वरघातकः॥ ८॥
एतेऽप्यजीर्णव्यथिता वाम्या ये विषपीड़िताः।
कफव्याप्तास्तथे वाम्या मधुकक्काथपानतः॥ ९॥
सुकुमारं कृशं बालं वृद्धं भीरुं न वामयेत्।
पीत्वा यवागूमाकण्ठं क्षीरतक्रदधीनि वा॥ १०॥
असात्म्यैः श्लेष्मलैर्भोज्यैर्दोषानुत्क्लेश्य देहिनः॥ ११॥
स्निग्धस्विन्नाय वमनं दत्तं सम्यक् प्रवर्त्तते।
वमनेषु च सर्वेषु सैन्धवं मधुना हितम्॥ १२॥
वीभत्सं वमनं दद्याद्विपरीतं विरेचनम्।
काथ्यद्रव्यस्य कुड़वं श्रावयित्वा जलाढ़के॥ १३॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

अर्द्धभागावशिष्टश्च वमनेष्ववचारयेत्।
क्वाथपाने नवप्रस्था ज्येष्ठा मात्रा प्रकीर्त्तिता॥ १४॥
मध्यमा षड्मिता प्रोक्ता त्रिप्रस्था च कनीयसी।
कल्कचूर्णावलेहानां त्रिपलं ज्येष्ठमात्रया॥ १५॥
मध्यमं द्विपलं विन्द्यात् कनीयस्तु पलं भवेत्।
वमने चापि वेगाः स्युरष्टौ पित्तान्त उत्तमाः॥ १६॥
षड्वेगा मध्यमे वेगास्त्वारस्त्ववरे मताः।
वमने च विरेके च तथा शोणितमोचणे॥ १७॥
सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः।
कफं कटुकतीक्ष्णोष्णैः पित्तं स्वादुहिमैर्जयेत्॥ १८॥
सुस्वादुलवणाम्लोष्णैः संसृष्टं वायुना कफम्।
कृष्णां राठफलं सिन्धुं कफे कोष्णजलैः पिबेत्॥ १९॥
पटोलवासानिम्बैश्च पित्ते शीतजलं पिबेत्।
सश्लेष्मवातपीड़ायां सक्षीरं मदनं पिबेत्॥ २०॥
अजीर्णे कोष्णपानीयैः सिन्धुं पीत्वा वमेत् सुधीः।
वमनं पाययित्वा च जानुमात्रासने स्थितम्॥ २१॥
कण्ठमेरण्डनालेन स्पृशन्तं वामयेद्भिषक्।
प्रसेको हृद्ग्रहः कोठः कण्डूः दुश्छर्दिते भवेत्॥ २२॥
अतिवान्ते भवेत् तृष्णा हिक्कोद्गारौ विसंज्ञिता।
जिह्वानिःसरणं चाक्ष्णोर्व्याप्तिर्हनुसंहतिः॥ २२॥
रक्तच्छर्दिः ष्ठीवनञ्च कण्ठपीड़ा च जायते।
वमनस्यातियोगेतु मृदु कुर्य्याद्विरेचनम्॥ २४॥
वमनान्तःप्रविष्टायां जिह्वायां कवलग्रहः।
स्निग्धाम्ललवणैर्हृद्यैर्घृतक्षीररसैर्हितः॥ २५॥
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः।
निःसृतान्तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत्॥ २६॥

क्वाथपाने नवप्रस्थं ज्येष्ठा मात्रा प्रकीर्त्तिता

सार्द्धत्रयोदशपलं सार्द्धषट्पलमित्यर्थः। प्रथमा प्रकृतिः द्वितीयपलमिति पाठः। सार्द्धत्रयोदशपलमित्यपि सार्द्धषट्पलं गौणम्

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

व्यावृत्तेऽक्षिणि घृताभ्यक्ते पीड़येच्च शनैः शनैः।
हनुमोचे स्मृतः स्वेदो नस्यञ्च श्लेष्मवातहृत् ॥ २७ ॥
रक्तपित्तविधानेन रक्तच्छर्दिमुपाचरेत्।
धात्रीरसाञ्जनोशीरलाजाचन्दनवारिभिः ॥ २८ ॥
मन्थं कृत्वा पाययेच्च सघृतं क्षौद्रशर्करम्।
शाम्यन्त्यनेन तृष्णार्याः पीड़ाश्छर्दिसमुद्भवाः ॥ २९ ॥
हृत्कण्ठशिरसां शुद्धिर्दीप्ताग्नित्वञ्च लाघवम्।
कफपित्तविनाशश्च सम्यग्वान्तस्य चेष्टितम् ॥ ३० ॥
ततोऽपराह्णे दीप्ताग्निं मुद्गषष्टिकशालिभिः।
हृद्यैश्च जाङ्गलरसैः कृत्वा यूषञ्च भोजयेत् ॥ ३१ ॥
तन्द्रानिद्रास्यदौर्गन्ध्यं कण्डूश्च ग्रहणी विषम्।
सुवान्तस्य न पीड़ायै भवन्त्येते कदाचन ॥ ३२ ॥
अजीर्णं शीतपानीयं व्यायामं मैथुनं तथा।
स्नेहाभ्यङ्गं प्रकोपञ्च दिनैकं वर्जयेत् सुधीः ॥ ३३ ॥
इति श्रीदामोदरसूनुना शार्ङ्गधरेण विरचिते
चिकित्सास्थाने वमनविधिरध्यायः।

---

## अथ चतुर्थोऽध्यायः।

[विरेचनविधिः]स्निग्धस्विन्नस्य वान्तस्य दद्यात् सम्यग्विरेचनम्।
अवान्तस्य त्वधः स्रस्तो ग्रहणीं छादयेत् कफः ॥ १ ॥
मन्दाग्निं गौरवं कुर्य्याज्जनयेद्वा प्रवाहिकाम्।
अथवा पाचनैरामं बलासञ्च विपाचयेत् ॥ २ ॥
स्निग्धस्य स्नेहनैः कार्य्यं स्वेदैः स्विन्नस्य रेचनम्।
शरत्काले वसन्ते च देहशुद्धै विरेचयेत् ॥ ३ ॥
अन्यदात्ययिके कार्य्यं शोधनं शीलयेद्बुधः।
पित्ते विरेचनं युञ्ज्यादामोद्भूते गदे तथा ॥ ४ ॥ *

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

उदरे च तथाध्माने कोष्ठशुद्धेश्च विशेषतः ।
दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ॥ ५ ॥
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ।
बालवृद्धावतिस्निग्धाः क्षतक्षीणो भयान्वितः ॥ ६ ॥
श्रान्तस्तृषार्त्तः स्थूलश्च गर्भिणी च नवज्वरी ।
नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी ॥ ७ ॥
शल्यार्दितश्च रूक्षश्च न विरेच्या विजानता ।
जीर्णज्वरी गरव्याप्तो वातरक्ती भगन्दरी ॥ ८ ॥
अर्शःपाण्डूदरग्रन्थिहृद्रोगारुचिपीडिताः ।
योनिरोगप्रमेहार्त्ता गुल्मप्लीह व्रणार्दिताः ॥ ९ ॥
विद्रधिच्छर्दिविस्फोटविषूचीकुष्ठसंयुताः ।
कर्णनासाशिरोवक्त्रगुदमेढ्रामयान्विताः ॥ १० ॥
प्लीहशोथादिरोगार्त्ता कृमिक्षीणानिलार्दिताः ।
शूलिनो मूत्ररोगार्त्ता विरेकार्हा नरा मताः ॥ ११ ॥
बहुपित्तो मृदुः प्रोक्तो बहुश्लेष्मा च मध्यमः ।
बहुवातः क्रूरकोष्ठो दुर्विरेच्यः स कथ्यते ॥ १२ ॥
मृद्वी मात्रा मृदौ कोष्ठे मध्यकोष्ठे च मध्यमा ।
क्रूरे तीक्ष्णा मता द्रव्यैर्मृदुमध्यमतीक्ष्णकैः ॥ १३ ॥
मृदुर्द्राक्षापयश्चाम्बुतैलैरपि विरिच्यते ।
मध्यमास्त्रिवृता तिक्ता राजवृक्षैर्विरिच्यते ॥ १४ ॥
क्रूरं स्नुक्पयसा हेमक्षीरीदन्तीफलादिभिः ।
मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफान्तका ॥ १५ ॥
वेगैर्विंशतिभिर्मध्या हीनोक्ता दशवेगकैः ।
द्विपलं श्रेष्ठमाख्यातं मध्यमं च पलं भवेत् ॥ १६ ॥
पलार्द्धञ्च कषायाणां कनीयस्तु विरेचनम् ।
कल्कमोदकचूर्णानां कर्षं मध्वाज्यलेहतः ॥ १७ ॥



CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

कर्षद्वयं पलं वापि वयोरोगाद्यपेक्षया।
पित्तोत्तरे त्रिवृच्चूर्णं द्राक्षाक्काथादिभिः पिबेत् ॥ १८ ॥
त्रिफलाक्काथगोमूत्रैः पिबेद् व्योषं कफार्दितः।
त्रिवृत्सैन्धवशुण्ठीनां चूर्णमुष्णैः पिबेन्नरः ॥ १९ ॥
वातार्दितो विरेकाय जाङ्गलातां रसेन वा।
एरण्डतैलं त्रिफला क्काथेन द्विगुणेन वा ॥ २० ॥
युक्तं पीतं पयोभिर्वा न चिरेण विरिच्यते।
त्रिवृता कौटजं वीजं पिप्पली विश्वभेषजम् ॥ २१ ॥
समृद्वीका रसक्षौद्रं वर्षाकाले विरेचनम्।
त्रिवृद्दुरालभामुस्तशर्करोदीच्यचन्दनम् ॥ २२ ॥
द्राक्षाम्बुना सयष्ट्याह्वं शीतलञ्च घनात्यये।
देवदारु त्रिवृतां चित्रकं पाठामजाजीं सरलां वचाम् ॥ २३ ॥
हेमक्षीरी च हेमन्ते चूर्णमुष्णाम्बुना पिबेत्।
कालीनिवी पिप्पली नागरं सिन्धुं श्यामा त्रिवृतया सह ॥ २४ ॥
लिहेत् क्षौद्रेण शिशिरे वसन्ते च विरेचनम्।
त्रिवृता शर्करा तुल्या ग्रीष्मकाले विरेचनम् ॥ २५ ॥
पत्रशब्देन तमालपत्रं ग्रा.. अभया मरिचं शुण्ठी विडङ्गामलकानि च।
पिप्पली पिप्पलीमूलं त्वक्पत्रं सुस्तमेव च ॥ २६ ॥
एतानि समभागानि दन्ती च त्रिगुणा भवेत्।
त्रिवृताष्टगुणा ज्ञेया षड्गुणा चात्र शर्करा ॥ २७ ॥
मधुना मोदकान् कृत्वा कर्षमात्रान् प्रमाणतः।
एकैकं भक्षयेत् प्रातः शीतं वानु पिबेज्जलम् ॥ २८ ॥
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते।
पानाहारविहारेषु भवेन्नियन्त्रणः सदा ॥ २९ ॥
विषमज्वरमन्दाग्निपाण्डुकासभगन्दरान्।
दुर्नामकुष्ठग्रहणीशोषगलगण्डभ्रमोदरान् ॥ ३० ॥

गुल्मा

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

विदाहप्लीहमेहांश्च यक्ष्माणं नयनामयान्।
वातरोगांस्तथाध्मानं मूत्रकृच्छ्राणि चाश्मरीम्॥ ३१॥
पृष्ठपार्श्वोरुजघनजङ्घोदररुजं जयेत्।
सततं शीलनादेषां पलितानि प्रणाशयेत्।
अभया मोदका ह्येते रसायनवराः स्मृताः॥ ३२॥

इति अभयामोदकः।

पीत्वा विरेचनं शीतजलैः संसिच्य चक्षुषी।
सुगन्धिं किञ्चिदाघ्राय ताम्बूलं शीलयेद्वरम्॥ ३३॥
निर्वातस्थो न वेगांश्च धारयेन्न स्वपेत्तथा।
शीताम्बु न स्पृशेत् क्वापि कोष्णनीरं पिबेन्मुहुः॥३४॥
कर्पूरं सर्वगात्रेषु लेपयेदगुरादिना।
वायवः स्थूलवेगांश्च धारयेन्न स्वपेत्तथा॥ ३५॥
बलासौषधपित्तानि वायुर्वान्ते यथा व्रजेत्।
रेकात्तथा मलं पित्तं भेषजञ्च कफो व्रजेत्॥ ३६॥
दुर्विरिक्तस्य नाभेस्तु स्तब्धत्वं कुक्षिशूलता।
पुरीषवातसङ्गश्च कण्डूमण्डलगौरवम्॥ ३७॥
विदाहोऽरुचिराध्मानं भ्रमश्छर्दिश्च जायते।
तं पुनः पाचनैः स्नेहैः पक्त्वा संस्वेद्य रेचयेत्॥ ३८॥
तेनास्योपद्रवा यान्ति दीप्तोऽग्निर्लघुता भवेत्।
विरेकस्यातियोगेन मूर्च्छा भ्रंशो गुदस्य च॥ ३९॥
शूलं कफातियोगः स्यान्मांसधावनसन्निभम्।
मेदोनिभं जलाभासं रक्तं वापि विरिच्यते॥ ४०॥
तस्य शीताम्बुभिः सिक्त्वा शरीरं तण्डुलाम्बुभिः।
मधुमिश्रैस्तथा शीतैः कारयेद्वमनं मृदु॥ ४१॥
सहकारत्वचः कल्को दध्ना सौवीरकेण वा।
पिष्टो नाभिप्रलेपेन हन्त्यतीसारमुल्बणम्॥ ४२॥

बलासौषध इति पाठान्तर

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

अजाक्षीरं रसं वापि वैष्किरं हारिणं तथा।
शालिभिः षष्टिकैः स्वल्पं मसूरैर्वापि भोजयेत् ॥ ४३ ॥
शीतैः संग्राहिभिर्द्रव्यैः कुर्य्यात् संग्रहणं भिषक्।
लाघवे मनसस्तुष्टावनुलोमं गतेऽनिले ॥ ४४ ॥
सुविरिक्तं नरं ज्ञात्वा पाचनं पाययेन्निशि।
इन्द्रियाणां बलं बुद्धेः प्रसादं वह्निदीपनम् ॥ ४५ ॥
धातुस्थैर्य्यं वयः स्थैर्य्यं भवेद्रेचनसेवनात्।
प्रवातसेवा शीताम्बु स्नेहाभ्यङ्गमजीर्णताम् ॥ ४६ ॥
व्यायामं मैथुनं चैव न सेवेत विरेचितः।
शालिषष्टिकमुद्गाद्यैर्यवागूं भोजयेत् कृताम् ॥ ४७ ॥
जङ्गालविष्किराणां वा रसैः शाल्योदनं हितम्।
विरेकाद्यौषधे पीते सम्यग् यो न विरिच्यते।
पिबेदुष्णाम्बुना तत्र सैन्धवं दोषशान्तये ॥ ४८ ॥

इति श्रीदामोदरसूनुना शार्ङ्गधरेण विरचिते
चिकित्सास्थाने विरेचनविधिरध्यायः ॥

---

## अथ पञ्चमोऽध्यायः।

[वस्तिविधिः] वास्तिर्द्विधाऽनुवासाख्यो निरूहश्च ततः परम्।
यः स्नेहैर्दीयते स स्यादनुवासननामकः ॥ १ ॥
कषायक्षीरतैलैर्यो निरूहः स निगद्यते।
वस्तिभिर्दीयते यस्मात् तस्माद्वस्तिरिति स्मृतः ॥ २ ॥
तत्रानुवासनाख्यो हि वस्तिर्यः सोऽत्र कथ्यते।
पूर्वमेव ततो वस्तिर्निरूहाख्यो भविष्यति ॥ ३ ॥
निरूहादुत्तरश्चैव वस्तिः स्यादुत्तराभिधः।
अनुवासनभेदश्च मात्रावस्तिरुदीरितः ॥ ४ ॥

अनुवासनभेदश्चेति पाठः

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पलद्वयं तस्य मात्रा तस्मादर्द्धापि वा भवेत्।
अनुवास्यस्तु रूक्षः स्यात् तीक्ष्णाग्निः केवलानिली॥ ५॥
नानुवास्यस्तु कुष्ठी स्यान्मेही स्थूलस्तथोदरी।
नास्थाप्या नानुवास्याः स्युरजीर्णोन्मादतृट्युताः॥ ६॥
शोकमूर्च्छाऽरुचिभयश्वासकासक्षयातुराः।
नेत्रं कार्य्यं सुवर्णादिधातुभिर्वृक्षवेणुभिः॥ ७॥
नलैर्दन्तैर्विषाणाग्रैर्मणिभिर्वा विधीयते।
एकवर्षात् तु षड्वर्षं यावन्मानं षडङ्गुलम्॥ ८॥
ततो द्वादशकं यावन्मानं स्यादष्टसम्मितम्।
ततः परं द्वादशभिरङ्गुलैर्नेत्रदीर्घता॥ ९॥
मुद्गच्छिद्रं कलायाभं छिद्रं कोलास्थिरन्ध्रकम्।
यथासंख्यं भवेन्नेत्रं श्लक्ष्णं गोपुच्छसन्निभम्॥ १०॥
आतुराङ्गुष्ठमानेन मूले स्थूलं विधीयते।
कनिष्ठिका परीणाहमग्रे च गुटिकामुखम्॥ ११॥
तन्मूले कर्णिके द्वे च कार्य्ये भागाच्च तुर्य्यकात्।
योजयेत् तत्र वस्तिञ्च बन्धद्वयविधानतः॥ १२॥
मृगाजशूकरगवां महिषस्यापि वा भवेत्।
मूत्रकोशस्य वस्तिस्तु तदलाभे च चर्मजः॥ १३॥
कषायरक्तः स मृदुर्वस्तिः स्निग्धो दृढ़ो हितः।
व्रणवस्तेस्तु नेत्रं स्यात् श्लक्ष्णमष्टाङ्गुलोन्मितम्॥ १४॥
मुद्गच्छिद्रं गृध्रपक्षनलिकापरिणाहि च।
शरीरोपचयं वर्णं बलमारोग्यमायुषः॥ १५॥
कुरुते परिवृद्धिञ्च वस्तिः सम्यगुपासितः।
दिवा शीते वसन्ते च स्नेहवस्तिः प्रदीयते॥ १६॥
ग्रीष्मवर्षाशरत्काले रात्रौ स्यादनुवासनम्।
न चातिस्निग्धमशनं भोजयित्वानुवासयेत्॥ १७॥

प्रस्थाप्या इति पाठोऽपि

चतुर्थकात् इ०

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

मदं मूर्च्छां च जनयेद् द्विधा स्नेहप्रयोजितः ।
हीनमात्रावुभौ वस्ती नातिकार्य्यकरौ स्मृतौ ॥१८॥
अतिमात्रौ तथानाहक्लमातीसारकारकौ ।
उत्तमस्य पलैः षड्भिर्मध्यमस्य पलैस्त्रिभिः ॥ १९ ॥
पलैकार्द्धेन हीनस्य युक्ता मात्रानुवासने ।
शताह्वासैन्धवाभ्याञ्च देयं स्नेहे च चूर्णकम् ॥ २० ॥
तन्मात्रोत्तममध्यान्ता षट्चतुर्द्वयमाषकैः ।
विरेचनात् सप्तरात्रे गते जातबलाय च ॥ २१ ॥
भुक्तान्नायानुवास्याय वस्तिर्देयोऽनुवासनः ।
अथानुवास्यं स्वभ्यक्तमुष्णाम्बु स्वेदितं शनैः ॥ २२ ॥
भोजयित्वा यथाशास्त्रं कृतं चङ्क्रमणं ततः ।
उत्सृष्टानिलविण्मूत्रं योजयेत् स्नेहवस्तिना ॥ २३ ॥
सुप्तस्य वामपार्श्वेन वामजङ्घाप्रसारिणः ।
कुञ्चितापरजङ्घस्य नेत्रं स्निग्धं गुदे न्यसेत् ॥ २४ ॥
बद्ध्वा वस्तिमुखं सूत्रैर्वामहस्तेन धारयेत् ।
पीड़येद्दक्षिणेनैव मध्यवेगेन धीरधीः ॥ २५ ॥
जृम्भाकासक्षवादींश्च वस्तिकालेन कारयेत् ।
त्रिंशन्मात्रामितः कालः प्रोक्तो वस्तेस्तु पीड़ने ॥ २६ ॥
ततः प्रणिहितः स्नेहः उत्तानो वाक्शतं भवेत् ।
प्रसारितैः सर्वगात्रैर्यथा वीर्य्यं विसर्पति ॥ २७ ॥
ताड़येत् तलयोरेनं त्रींस्त्रीन् वारान् शनैः शनैः ।
स्फिजोश्चैवं ततः श्रेणीं शय्यां चैवोत्क्षिपेत् ततः ॥२८॥
जाते विधाने तु ततः कुर्य्यान्निद्रां यथासुखम् ।
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु ॥ २९ ॥
उपद्रवं विना चैव स सम्यगनुवासितः ।
जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः ॥ ३० ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

लघ्वन्नं भोजयेत् कामं दीप्ताग्निस्तु नरो यदि ।
अनुवासिताय दातव्यमितरेऽह्नि सुखोदकम् ॥ ३१ ॥
धान्यं शुण्ठी कषायं वा स्नेहव्यापत्तिनाशनम् ।
अनेन विधिना षड् वा सप्त वाष्टौ नवापि वा ॥ ३२ ॥
विधेया वस्तयस्तेषामन्तरा तु निरूहणम् ।
अथवा यस्य तत्कालं स्नेहो निर्य्याति केवलम् ॥ ३३ ॥
तस्यान्योऽल्पतरो देयो न हि स्निग्धस्य तिष्ठति ।
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः ॥ ३४ ॥
तदाङ्गशैथिल्याध्मानं शूलं श्वासश्च जायते ।
पक्वाशयगुरुत्वञ्च तत्र दद्यान्निरूहणम् ॥ ३५ ॥
तीक्ष्णं तीक्ष्णौषधैर्युक्ता फलवर्त्तिर्हिताथवा ।
यथानुलोमनं वायुर्मलं स्नेहश्च जायते ॥ ३६ ॥
यथा विरेचनं दद्यात् तीक्ष्णं नस्यञ्च शस्यते ।
यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः ॥ ३७ ॥
सर्वोऽल्पो वा वृतो रौक्ष्यादुपेक्ष्यः स विजानता ।
अनायान्तं त्वहोरात्रे स्नेहं संशोधनैर्हरेत् ॥ ३८ ॥
स्नेहवस्तावनायाते नान्यः स्नेहो विधीयते ।
गुडूच्यैरण्डपूतीकभार्गीवृषकरोहिषम् । ३९ ॥
शतावरीं सहचरं काकनासां पलोन्मिताम् ।
यवमाषातसीकोलकुलत्थान् प्रस्थितोन्मितान् ॥ ४० ॥
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च ।
पचेत् तैलाढ़कं पेष्यैर्जीवनीयैः पलोन्मितैः ॥ ४१ ॥
अनुवासनमेतद्धि सर्ववातविकारनुत् ।
षट्सप्ततिव्यापदस्तु जायन्ते वस्तिकर्मणः ॥ ४२ ॥
दूषिताः समुदायेन ताश्चिकित्स्यास्तु सुश्रुतात् ।
पानाहारविहाराश्च परिहाराश्च कृत्स्नशः ।

करंज्वा = कौवाठोडी
प्रस्थोन्मिता इ. पा. सा.

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

स्नेहपानसमा कार्य्या नात्र कार्य्या विचारणा ॥ ४३ ॥

इति श्रीदामोदरसूनुना शार्ङ्गधरेण विरचिते चिकित्सास्थाने स्नेहवस्तिविधिरध्यायः।

---

## अथ षष्ठोऽध्यायः।

[निरूहणवस्तिविधिः]निरूहवस्तिर्बहुधा भिद्यते कारणान्तरैः
तैरेव तस्य नामानि कृतानि मुनिपुङ्गवैः ॥ १ ॥
निरूहस्यापरं नाम प्रोक्तमास्थापनं बुधैः।
स्वस्थानस्थापनात् दोषधातूनां स्थापनं मतम् ॥ २ ॥
निरूहस्य प्रमाणञ्च प्रस्थं पादोत्तरं परम्। परं श्रेष्ठम्
मध्यमं प्रस्थमुद्दिष्टं हीनञ्च कुड़वास्त्रयः ॥ ३ ॥
अतिस्निग्धोत्क्लिष्ट दोषः क्षतोरस्कः कृशस्तथा। अनन्दानवान्
आध्मानच्छर्दिहिक्कार्शःकासश्वासप्रपीड़ितः ॥ ४ ॥
गुदशोफातिसारार्त्तो विषूचीकुष्ठसंयुतः।
गर्भिणी मधुमेही च नास्थाप्यश्च जलोदरी ॥ ५ ॥
वातव्याधावुदावर्त्ते वातासृग्विषमज्वरे।
मूर्च्छातृष्णोदरानाहमूत्रकृच्छ्राश्मरीषु च ॥ ६ ॥
वृद्ध्यसृग्दरमन्दाग्निप्रमेहेषु निरूहणम्।
शूलेऽम्लपित्ते हृद्रोगे योजयेद्विधिवद् बुधः ॥ ७ ॥
उत्सृष्टानिलविण्मूत्रं स्निग्धस्विन्नमभोजितम्।
मध्याह्ने गृहमध्ये च यथायोग्यं निरूहयेत् ॥ ८ ॥
स्नेहवस्तिविधानेन बुधः कुर्य्यान्निरूहणम्।
जाते निरूहे च ततो भवेदुत्कटकासनः ॥ ९ ॥
तिष्ठेन्मुहूर्त्तमात्रं तु निरूहागमनेच्छया।
अनायत्तं मुहूर्त्तन्तु निरूहं शोधनैर्हरेत् ॥ १० ॥
निरूहैरेव मतिमान् क्षारमूत्राम्लसैन्धवैः।

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

यस्य क्रमेण गच्छन्ति विट्पित्तकफवायव: ॥ ११ ॥
लाघवञ्चोपजायेत सुनिरूहं तमादिशेत्।
यस्य स्याद्वस्तिरल्पाल्पवेगो हीनमलानिल: ॥ १२ ॥
मूत्रार्त्ति जाड्यारुचिमान् दुर्निरूहं तमादिशेत्।
विरिक्तता मनस्तुष्टि: स्निग्धता व्याधिनिग्रह: ॥ १३ ॥
आस्थापन स्नेहवस्त्योः सम्यग्दाने तु लक्षणम्।
अनेन विधिना युञ्ज्यान्निरूहं वस्तिदानवित् ॥ १४ ॥
द्वितीयं वा तृतीयं वा चतुर्थं वा यथोचितम्।
स स्नेह एक: पवने पित्ते द्वौ पयसा सह ॥ १५ ॥
कषायकटुमूत्राद्या: कफे च्चोष्णास्त्रयो: हिता:। स्वाद्या: १. पाठान्तर
पित्तश्लेष्मानिलाविष्टं क्षीरयूषरसै: क्रमात् ॥ १६ ॥
निरूहं भोजयित्वा च ततस्तमनुवासयेत्। योजयित्वेति पाठोऽपि स्यात्
सुकुमारस्य वृद्धस्य बालस्य च मृदुर्हित: ॥ १७ ॥
वस्तिस्तीक्ष्ण: प्रयुक्तस्तु तेषां हन्याद्बलायुषी।
दद्यादुत्क्लेशनं पूर्वं मध्ये दोषहरं तत:।
पश्चात् संशमनीयञ्च दद्याद्वस्तिं विचक्षण: ॥ १८ ॥
एरण्डवीजं मधुकं पिप्पली सैन्धवं वचा।
ह. हपुषाफलकल्काश्च वस्तिरुत्क्लेशन: स्मृत: ॥१९॥
उत्क्लेशनवस्ति:।

शताह्वा मधुकं विल्वं कौटजं फलमेव च।
सकाञ्जिक: सगोमूत्रो वस्तिर्दोषहर: स्मृत: ॥२०॥ दोषहरवस्ति:।
प्रियङ्गुर्मधुकं मुस्ता तथैव च रसाञ्जनम्।
सक्षीर: शस्यते वस्तिर्दोषाणां शमन: स्मृत: ॥२१॥ शमनवस्ति:।
शोधनद्रव्यनि:क्वाथ्ये तत्कल्कै: स्नेहसैन्धवै:।
युक्त्या खजेन मथिता वस्तय: शोधना: स्मृता: ॥२२॥ शोधनवस्तय:
त्रिफलक्वाथगोमूत्रक्षीद्रक्षारसमायुता:।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

ऊषकादिप्रतीवापा वस्तयो लेखणाः स्मृताः ॥२३॥ लेखणवस्तयः
बृंहणद्रव्यनिःक्वाथकल्कैर्मधुरकैर्युताः।
सर्पिर्मांसरसोपेता वस्तयो बृंहणाः स्मृताः ॥२४॥ बृंहणवस्तयः।
बदर्य्यैरावतीशेलुशाल्मलीधान्यनागराः।
क्षीरसिद्धाः क्षौरयुक्ता नाम्ना पिच्छिलसंज्ञिताः ॥ २५ ॥
अजोरभ्रैणकरुधिरैर्युक्ता देया विचक्षणैः।
मात्रा पिच्छिलवस्तीनां पलैर्द्वादशभिर्मता ॥ २६॥ पिच्छिलवस्तयः
दद्यादौ सैन्धवस्याक्षं मधुनः प्रसृतिद्वयम्।
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतित्रयम् ॥ २७ ॥
एकीभूते ततः स्नेहे कल्कस्य प्रसृतिं क्षिपेत् ॥।
संमूर्च्छिते कषायन्तु चतुःप्रसृतिसंमितम् ॥ २८ ॥
क्षिप्त्वा विमथ्य दद्याच्च निरूहं कुशलो भिषक्।
वाते चतुःपलं क्षौद्रं दद्यात् स्नेहस्य षट्पलम् ॥ २९ ॥
पित्ते चतुःपलं क्षौद्रं स्नेहं दद्यात्पलत्रयम्।
कफे च षट्पलं क्षौद्रं क्षिपेत् स्नेहं चतुःपलम् ॥ ३० ॥

इति निरूहमात्राविधिः।

एरण्डक्वाथ तुल्यांशं मधुतैलं पलाष्टकम्।
शतपुष्पापलार्द्धेन सैन्धवार्द्धेन संयुतम् ॥ ३१ ॥
मधुतैलकसंज्ञोऽयं वस्तिर्दार्वीविलोड़ितः।
मेदोगुल्मकृमिप्लीहमलोदावर्त्तनाशनः।
बलवर्णकरश्चैव वृष्योद्दीपनबृंहणः ॥ ३२ ॥ मधुतैलकवस्तिः।
क्षौद्राज्यक्षीरतैलानां प्रसृतं प्रसृतं भवेत्।
हपुषासैन्धवाक्षांशो वस्तिः स्याद्दीपनः परः ॥३३॥ यापनवस्तिः
एरण्डमूलनिःक्वाथं मधुतैलं ससैन्धवम्।
एष युक्तरथो वस्तिः सवचापिप्पलीफलः ॥३४॥ युक्तरथवस्तिः।
पञ्चमूलस्य निःक्वाथं तैलं मागधिका मधु।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

ससैन्धवसमायुक्तः सिद्धवस्तिरिति स्मृतः ॥ ३५ ॥ [सिद्धवस्तिः ।]
स्नानमुष्णोदकैः कुर्य्याद्दिवास्वप्नमजीर्णताम् ।
वर्जयेदपरं सर्वमाचरेत् स्नेहवस्तिवत् ।
निरूहादुत्तरो यस्मात् तस्मादुत्तरसंज्ञितः ॥ ३६ ॥
इति श्रीदामोदरसूनुना शार्ङ्गधरेण विरचिते चिकित्सास्थाने निरूहवस्तिविधिरध्यायः ।

---

## अथ सप्तमोऽध्यायः ।

[उत्तरवस्तिविधिः] अतः परं प्रवक्ष्यामि वस्तिमुत्तरसंज्ञितम् ।
द्वादशाङ्गुलकं नेत्रं मध्ये च कृतकर्णिकम् ॥ १ ॥
मालतीपुष्पवृन्ताभच्छिद्रं सर्षपनिर्गमम् ।
पञ्चविंशतिवर्षाणामधोमात्रा द्विकार्षिकी ॥ २ ॥
तदूर्द्ध्वं पलमात्रा च स्नेहस्योक्ता भिषग्वरैः ।
अथास्थापनशुद्धस्य तृप्तस्य स्नानभोजनैः ॥ ३ ॥
स्थितस्य जानुमात्रे च पीठेऽन्विष्य शलाकया ।
स्निग्धया मेढ्रमार्गञ्च ततो नेत्रं नियोजयेत् ॥ ४ ॥
शनैः शनैर्घृताभ्यक्तं मेढ्ररन्ध्रेऽङ्गुलानि षट् ।
ततोऽवपीडयेद् वस्तिं शनैर्नेत्रञ्च निर्हरेत् ॥ ५ ॥
ततः प्रत्यागते स्नेहे स्नेहवस्तिक्रमो हितः ।
स्त्रीणां कनिष्ठिका स्थूलं नेत्रं कुर्य्याद्दशाङ्गुलम् ॥ ६ ॥
मुद्गप्रवेशं योज्यं च योन्यन्तश्चतुरङ्गुलम् ।
द्व्यङ्गुलं मूत्रमार्गे च सूक्ष्मं नेत्रं विचक्षणैः ॥ ७ ॥
मूत्रकृच्छ्रविकारेषु बालानान्त्वेकमङ्गुलम् ।
शनैर्निष्क्रम्यमाधेयं सूक्ष्मं नेत्रं विचक्षणैः ॥ ८ ॥
योनिमार्गेषु नारीणां स्नेहमात्रा द्विपालिकी ।
मूत्रमार्गे पलोन्माना बालानाञ्च द्विकार्षिकी ॥ ९ ॥

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

उत्तानायै स्त्रियै दद्यादूर्द्धजानौ विचक्षणः।
अप्रत्यागच्छति भिषग्वस्तावुत्तरसंज्ञिते ॥ १० ॥
भूयो वस्तिं विदध्याच्च संयुतैः शोधनैर्गुणैः।
फलवर्त्तिं निदध्याद्वा योनिमार्गे दृढं भिषक् ॥ ११ ॥
सूत्रैर्विनिर्मितां स्निग्धां शोधनद्रव्यसंयुताम्।
दह्यमाने तथा वस्तौ दद्याद्वस्तिं विशारदः ॥ १२ ॥
क्षीरवृक्षकषायेण पयसा शीतलेन वा।
वस्तिः शुक्ररुजः पुंसां स्त्रीणामार्त्तवजां रुजम् ॥ १३ ॥
हन्यादुत्तरवस्तिस्तु नोचितो मेहिनां क्वचित्।
सम्यग्गेतस्य लिङ्गानि व्यापदः क्रम एव च।
वस्तेरुत्तरसंज्ञस्य समानं स्नेहवस्तिना ॥ १४ ॥
[फलवर्त्तिविधिः] घृताभ्यक्ते गुदे क्षेप्या श्लक्ष्णा साङ्गुष्ठसन्निभा।
मलप्रवर्त्तिनी वर्त्तिः फलवर्त्तिश्च सा स्मृता ॥ १५ ॥

---

## अथ अष्टमोऽध्यायः।

[अथ नस्यविधिः]नस्यं तत् कथ्यते धीरैर्नासाग्राह्यं यदौषधम्।
नावनं नस्यकर्मेति तस्य नामद्वयं मतम् ॥ १ ॥
तस्य भेदो द्विधा प्रोक्तो रेचनं स्नेहनं तथा।
रेचनं कर्षणं प्रोक्तं स्नेहनं बृंहणं मतम् ॥ २ ॥
कफपित्तानिलध्वंसे पूर्वं मध्यापराह्णके।
दिने तु गृह्यते नस्यं रात्रावप्युत्कटे गदे।
नस्यं त्यजेद्भोजनान्ते दुर्दिने चापतर्पितः ॥ ३ ॥
तथा नवप्रतिश्यायी गर्भिणी गरदूषितः।
अजीर्णी दत्तवस्तिश्च पीतस्नेहोदकासवः ॥ ४ ॥
क्रुद्धः शोकाभिभूतश्च तृषार्त्तो वृद्धबालकौ।
वेगावरोधी स्नातश्च स्नातुकामश्च वर्जयेत् ॥ ५ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

अष्टवर्षस्य बालस्य नस्यकर्म समाचरेत् ।
अशीतिवर्षादूर्द्धञ्च नावनं नैव दीयते ॥ ६ ॥
अथ वैरेचनं नस्यं ग्राह्यं तैलैः सुतीक्ष्णकैः ।
तीक्ष्णभेषजसिद्धैर्वा स्नेहैः क्वाथैः रसैस्तथा ॥ ७ ॥
नासिकारन्ध्रयोरष्टौ षट् चत्वारश्च बिन्दवः ।
प्रत्येकं रेचनं योज्यं मुख्यमध्याल्पमात्रया ॥ ८ ॥
नस्यकर्मणि दातव्यं घ्राणेकं तीक्ष्णमौषधम् ।
हिङ्गु स्याद् यवमात्रन्तु माषैकं सैन्धवं मतम् ॥ ९ ॥
क्षीरञ्चैवाष्टशाणं स्यात् पानीयञ्च त्रिकर्षिकम् ।
कार्षिकं मधुरं द्रव्यं नस्यकर्मणि योजयेत् ॥ १० ॥
अवपीड़ा प्रधमनं द्वौ भेदावपरौ स्मृतौ ।
शिरोविरेचनस्यात्र तौ तु देयौ यथायथम् ॥ ११ ॥
कल्कीकृतादौषधाद् यः पीड़ितो निःसृतो रसः ।
सोऽवपीड़ः समुद्दिष्टः तीक्ष्णद्रव्यसमुद्भवः ॥ १२ ॥
षड़ङ्गुला द्विवक्त्रा या नाड़ी चूर्णं तया धमेत् ।
तीक्ष्णं कोलमितं वक्त्रवातैः प्रधमनं हि तत् ॥ १३ ॥
ऊर्द्ध्वजत्रुगते रोगे कफजे स्वरसंक्षये ।
अरोचके प्रतिश्याये शिरःशूले च पीनसे ॥ १४ ॥
शोफापस्मारकोष्ठेषु नस्यं वैरेचनं हितम् ।
भीरुस्त्रीकृशबालानां नस्यं स्नेहेन शस्यते ॥ १५ ॥
गलरोगे सन्निपाते निद्रायां सविषमज्वरे ।
मनोविकारे कृमिषु युज्यते चावपीड़नम् ॥ १६ ॥
अत्यन्तोत्कटदोषेषु विसंज्ञेषु च दीयते ।
चूर्णं प्रधमनं धीरैस्तद्धि तीक्ष्णतरं यतः ॥१७॥
[नस्यं वैरेचनं यथा] नस्यं स्याद्गुड़शुण्ठीभ्यां पिप्पल्या सैन्धवेन वा
जलपिष्टेन तेनाक्षिकर्णं नासाशिरोगदाः ॥ १८ ॥


CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

मन्याहनुगलोद्भूताः नश्यन्ति भुजपृष्ठजाः।
मधूकसारकृष्णाभ्यां वचामरिचसैन्धवैः॥ १९॥
नस्यं कोष्णजलैः पिष्टं दद्यात् संज्ञाप्रबोधनम्।
अपस्मारे तथोन्मादे सन्निपातेऽपतन्त्रके॥ २०॥
सैन्धवं श्वेतमरिचं सर्षपाकुष्ठमेव च।
वस्तमूत्रेण पिष्टानि नस्यं तन्द्रानिवारणम्॥ २१॥
रोहीतमत्स्यपित्तेन भावितं सैन्धवं वचा।
मरिचं पिप्पली शुण्ठी कङ्कोलं लसुनं पुरम्॥ २२॥
कट्फलं चेति तच्चूर्णं देयं प्रधमनं बुधैः।
अथ बृंहणनस्यस्य कल्पना कथ्यतेऽधुना॥ २३॥
मर्शश्च प्रतिमर्शश्च द्वौ भेदौ स्नेहने मतौ।
मर्शस्य तर्पिणी माला मुख्या शाणैः स्मृताष्टभिः॥ २४॥
मध्यमा च चतुःशाणैर्हीना शाणमिता मता।
एकैकस्मिंस्तु मात्रेयं देया नासापुटे बुधैः॥ २५॥
मर्शस्य द्वित्रिवेलं वा वीक्ष्य दोषबलाबलम्।
एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः॥ २६॥
त्र्यहं पञ्चाहमथवा सप्ताहं वा सुयन्त्रितः।
मर्शे शिरोविरेके च व्यापदो विविधाः स्मृताः॥ २७॥
दोषोत्क्लेशक्षयाच्चैव विज्ञेयास्ता यथाक्रमम्।
दोषोत्क्लेशनिमित्तासु युञ्ज्याद्वमनशोधनम्॥ २८॥
अथ क्षयनिमित्तासु यथास्वं बृंहणं हितम्।
शिरोनासाक्षिरोगेषु सूर्यावर्त्तार्द्धभेदके॥ २९॥
दन्तरोगे बले हीने मन्याबाहुंसजे गदे।
मुखशोषे कर्णनादे वातपित्तगदे तथा॥ ३०॥
अकालपलिते चैव केशश्मश्रुप्रपातने।
युज्यते बृंहणं नस्यं स्नेहैर्वा मधुरद्रवैः॥ ३१॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

[बृंहणं नस्यं यथा] सशर्करं पयःपिष्टं भृष्टमाज्येन कुङ्कुमम् ।
नस्यप्रयोगतो हन्याद्वातरक्तभवा रुजः ॥ ३२ ॥
अ शङ्खाचिशिरःकर्णसूर्य्यावर्त्तार्द्धभेदकान् ।
नस्यं स्यादनुतैलेन तथा नारायणेन वा ॥ ३३ ॥
माषादिना वा सर्पिर्भिस्तत्तद्भेषजसाधितैः ।
तैलं कफे स्याद्वाते च केवले पवने वसा ॥ ३४ ॥
दद्यान्नस्यं सदा पित्ते सर्पिर्मज्जानमेव च ।
मापात्मगुप्तारास्नाभिर्बलारुवकरोच्चिषैः ॥ ३५ ॥
क्वतोऽश्वगन्धया क्वाथो हिङ्गुसैन्धवसंयुतः ।
कोष्णो नस्यप्रयोगेण पक्षाघातं सकम्पनम् ॥ ३६ ॥
जयेदर्दितवातं च मन्यास्तम्भापबाहुकौ ।
प्रतिमर्शस्य मात्रा तु द्विद्विविन्दुमिता मता ॥ ३७ ॥
प्रत्येकशो नासिकयोः स्नेहेनेति विनिश्चितम् ।
स्नेहे ग्रन्थिद्वयं यावन्निमग्नं चोद्धृतं ततः ॥ ३८ ॥
तर्जन्याः स्रवेद्विन्दुः सा मात्रा विन्दुसंज्ञिता ।
एवं विधैर्विन्दुसंज्ञैरष्टाभिः शाण उच्यते ॥ ३९ ॥
स देयो मर्शनस्येषु प्रतिमर्शो द्विविन्दुकः ।
समयाः प्रतिमर्शस्य बुधैः प्रोक्ताश्चतुर्दश ॥ ४० ॥
प्रभाते दन्तकाष्ठान्ते गृहान्निर्गमने तथा ।
व्यायामाध्वव्यवायान्ते विण्मूत्रान्तेऽञ्जने कृते ॥ ४१ ॥
कवलान्ते भोजनान्ते दिवासुप्तोत्थिते तथा ।
वमनान्ते तथा सायं प्रतिमर्शः प्रयुज्यते ॥ ४२ ॥
ईषदुच्छिङ्घनात् स्नेहो यदा वक्त्रं प्रपद्यते ।
नस्ये निषिक्तं तं विद्यात्प्रतिमर्शप्रमाणतः ॥ ४३ ॥
उच्छिङ्घ्य न पिबेच्चैतन्निष्ठीवेन्मुखमागतम् ।
क्षीणे तृष्णास्यशोषार्त्ते बाले वृद्धे च युज्यते ॥ ४४ ॥

CC0. Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

प्रतिमर्शेन शाम्यन्ति रोगाश्चैवोर्द्ध्वजत्रुजाः।
बलीपलितनाशश्च बलमिन्द्रियजं भवेत्॥ ४५॥
बिभीतनिम्बगम्भारीशिवाशेलुश्च काकिनी।
एकैकं तैलनस्येन पलितं नश्यति ध्रुवम्॥ ४६॥
अथ नस्यविधिं वक्ष्ये नस्यग्रहणहेतवे।
देशे वातरजामुक्ते कृतदन्तनिघर्षणम्॥ ४७॥
विशुद्धं धूमपानेन स्विन्नभालगलं तथा।
उत्तानशायिनं किञ्चित्प्रलम्बशिरसं नरम्॥ ४८॥
आस्तीर्य्य हस्तपादञ्च वस्त्राच्छादितलोचनम्।
समुच्छ्वासितनासाग्रं वैद्यो नस्येन योजयेत्॥ ४९॥
कोष्णमाच्छिन्नधारञ्च हेमताराादिशुक्तिभिः।
शुक्त्या वा पत्रयुक्त्या वा प्लोतैर्वा नस्यमाचरेत्॥ ५०॥
नस्येष्वासिच्यमानेषु शिरो नैव प्रकम्पयेत्।
न कुप्येन्न प्रभाषेत नोच्छिक्केन्न हसेत्तथा॥ ५१॥
एतैर्हि विहितः स्नेहो नैवान्तः संप्रपद्यते।
ततः कासप्रतिश्यायशिरोऽक्षिगदसम्भवः॥ ५२॥
शृङ्गाटकमभिप्लाव्य स्थापयेन्न गिलेद् द्रवम्।
पञ्च सप्तदशैव स्युर्मात्रा नस्यस्य धारणे॥ ५३॥
उपविश्याथ निष्ठीवेन्नासावक्त्रागतं द्रवम्।
वामदक्षिणपार्श्वाभ्यां निष्ठीवेत् सम्मुखं नहि॥ ५४॥
नीते नस्ये मनस्तापं रजःक्रोधञ्च संत्यजेत्।
शयीत निद्रां त्यक्त्वा च प्रोतान्तो वाक्शतं नरः॥ ५५॥
तथा वैरेचनस्यान्ते धूमो वा कवलो हितः।
नस्ये त्रीण्युपदिष्टानि लक्षणानि प्रयोगतः॥ ५६॥
शुद्धिहीनातियोगानि विशेषाच्छास्त्रचिन्तकैः।
लाघवं मनसः शुद्धिः स्रोतसां व्याधिसंक्षयः॥ ५७॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम्।
कण्डूपदेहौ गुरुता स्रोतसां कफसंस्रवः॥ ५८॥
मूर्ध्नि हीन विशुद्धे तु लक्षणं परिकीर्त्तितम्।
मस्तुलुङ्गागमो वातवृद्धिरिन्द्रियविभ्रमः॥ ५९॥
शून्यता शिरसश्चापि मूर्ध्नि गाढ़े विरेचिते।
हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत्॥ ६०॥
सम्यग्विशुद्धे शिरसि सर्पिर्नस्ये निषेचयेत्।
कफः प्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः॥ ६१॥
लक्षणं तदतिस्निग्धे तत्र रूक्षं प्रदापयेत्।
भोजयेच्चानभिष्यन्दि नस्याचारिकमादिशेत्॥ ६२॥
वमनं रेचनं नस्यं निरूहश्चानुवासनम्।
एतानि पञ्च कर्माणि कथितानि मुनीश्वरैः॥ ६३॥

---

## अथ नवमोऽध्यायः।

[अथ धूमपानविधिः] धूमस्तु षड्विधः प्रोक्तः शमनो बृंहणस्तथा।
रेचनः कासहा चैव वामनो व्रणधूपनः॥ १॥
शमनस्य तु पर्य्यायौ मध्यः प्रायोगिकस्तथा।
बृंहणस्यापि पर्य्यायौ स्नेहनो मृदुरेव च॥ २॥
रेचनस्यापि पर्य्यायौ शोधनस्तीक्ष्ण एव च।
अधूमार्हाश्च खल्वेते श्रान्तो भीतश्च दुःखितः॥ ३॥
दत्तवस्तिर्विरक्तश्च रात्रौ जागरितस्तथा।
पिपासितश्च दाहार्त्तस्तालुशोषी तथोदरी॥ ४॥
शिरोऽभितापी तिमिरी छर्द्याध्मानप्रपीड़ितः।
क्षतोरस्कः प्रमेहार्त्तः पाण्डुरोगी च गर्भिणी॥ ५॥
रूक्षः क्षीणाभ्यवहृतक्षीरक्षौद्रघृतासवः।
भुक्तान्नदधिमत्स्यश्च बालो वृद्धः कृशस्तथा॥ ६॥

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

अकाले चातिपीतश्च धूमः कुर्य्यादुपद्रवान् ।
तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्पणम् ॥ ७ ॥
सर्पिरिक्षुरसं द्राक्षां पयो वा शर्कराम्बु वा ।
मधुराम्लौ रसौ वापि वमनाय प्रदापयेत् ॥ ८ ॥
धूमो द्वादशकाद्वर्षाद् ग्रह्यतेऽशीतिकान्न च ।
कासश्वासप्रतिश्यायान् मन्याहनुशिरोरुजः ॥ ९ ॥
वातश्लेष्मविकारांश्च हन्याद्धूमः सुयोजितः ।
धूमप्रयोगात् पुरुषः प्रसन्नेन्द्रियवाङ्मनाः ॥ १० ॥
दृढ़केशद्विजश्मश्रुः सुगन्धिवदनो भवेत् ।
धूमनाड़ी भवेत्तत्र त्रिखण्डा च त्रिपर्विका ॥ ११ ॥
कनिष्ठिका परीणाहा राजमाषागमान्तरा ।
धूमनाड़ी भवेत् दीर्घा शमने रोगिणोऽङ्गुलैः ॥ १२ ॥
चत्वारिंशन्मितैस्तद्वद्द्वाविंशद्भिर्मृदौ मता ।
तीक्ष्णे चतुर्विंशतिभिः कासघ्नो षोड़शोन्मितैः ॥ १३ ॥
दशाङ्गुलैर्वामनीया तथा स्याद् व्रणनाड़िका ।
कलायमण्डलस्थूला कुलत्थागमरन्ध्रका ।
अथेषिकां प्रक्षिपेच्च सुश्लक्ष्णां द्वादशाङ्गुलाम् ॥ १४ ॥
धूम द्रव्यस्य कल्केन लेपश्चाष्टाङ्गुलः स्मृतः ।
कल्कं कर्षमितं लिप्त्वा छायाशुष्कञ्च कारयेत् ॥ १५ ॥
ईषिकामपनीयाथ स्नेहाक्तां वर्त्तिमादरात् ।
अङ्गारैर्दीपितां कृत्वा धृत्वा नेत्रस्य रन्ध्रके ॥ १६ ॥
वदनेन पिबेद्धूमं वदनेनैव सन्त्यजेत् ।
नासिकाभ्यां ततः पीत्वा मुखेनैव वमेत् सुधीः ॥ १७ ॥
शरावसंपुटे छिद्रं कृत्वा कल्कमङ्गारदीपितम् ।
छिद्रे नेत्रं निवेश्याथ व्रणं तेनैव धूपयेत् ॥ १८ ॥
एलादिकल्कं शमनेस्निग्धं सर्जरसं मृदौ ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

रेचने तीक्ष्णकल्कञ्च कासघ्नं क्षुद्रिकोषणम् ॥ १९ ॥
वमने स्नायुवर्माद्यं दद्याद्धूमस्य पानकम् ।
व्रणे निम्बवचाद्यञ्च धूपनं सम्प्रशस्यते ।
अन्येऽपि धूम्नो रोगेषु कर्त्तव्या रोगशान्तये ॥ २० ॥
[स यथा] मयूरपिच्छं निम्बस्य पत्राणि वृहतीफलम् ।
मरिचं हिङ्गु मांसी च वीजं कार्पाससम्भवम् ॥ २१ ॥
छागरोमाहिनिर्मोकं विष्ठा वैड़ालिकी तथा ।
गजदन्तस्य तच्चूर्णं किञ्चिद्घृतविमिश्रितम् ॥ २२ ॥
गेहेषु धूपनं दत्तं सर्वान् बालग्रहान् जयेत् ।
पिशाचान् राक्षसान् जित्वा सर्वज्वरहरो भवेत् ॥ २३ ॥
[अपराजितो धूपः] परिहारस्तु धूमेषु कार्य्यो रेचननस्यवत् ।
नेत्राणि धातुजान्याहुर्नालवंशादिजान्यपि ॥ २४ ॥

---

## अथ दशमोऽध्यायः ।

### अथ गण्डूषकवलप्रतिसारणविधिः ।

चतुर्विधः स्याद्गण्डूषः स्नैहिकः शमनस्तथा ।
शोधनो रोपणश्चैव कवलश्चापि तद्विधः ॥ १ ॥
स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः ।
पित्ते कट्वम्ललवणैरुष्णैः संशोधनः कफे ॥ २ ॥
कषायतिक्तमधुरैः कटूष्णैः रोपणो व्रणे ।
चतुःप्रकारो गण्डूषः कवलश्चापि कीर्त्तितः ॥ ३ ॥
असञ्चारी मुखे पूर्णे गण्डूषः कवलश्चरः ।
तत्र द्रवेण गण्डूषः कल्केन कवलः स्मृतः ॥ ४ ॥
दद्याद् द्रवेषु संचूर्णं गण्डूषे कोलमात्रकम् ।
कर्षप्रमाणः कल्कश्च कवले दीयते बुधैः ॥ ५ ॥
धार्य्यते पञ्चमाद्वर्षात् गण्डूषकवलादयः ।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

गण्डूषात् सुस्थित: कुर्य्यात् स्विन्नभालगलादिक: ॥ ६ ॥
मनुष्यं स्त्रीं तथा पञ्च सप्त वा दोषनाशनात् ।
कफपूर्णास्यता यावच्छेदो दोषस्य वा भवेत् ।
नेत्रघ्राणस्रुतिर्यावत्तावद्गण्डूषधारणम् ॥ ७ ॥
[तद्यथा] तिलकल्कोदकं चीरं स्नेहो वा स्नैहिके हितम् ।
तिला नीलोत्पलं सर्पिश्शर्करा चीरमेव च ॥ ८ ॥
सक्षौद्रो हनुवक्त्रास्थो गण्डूषो दाहनाशन: ।
वैशद्यं जनयत्यास्ये सन्दधाति मुखव्रणान् ॥ ९ ॥
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ।
विष चाराग्निदग्धे च सर्पिर्धार्य्यं पयोऽथवा ॥ १० ॥
तैलसैन्धवगण्डूषो दन्तचाले प्रशस्यते ।
शोषं मुखस्य वैरस्यं गण्डूष: काञ्जिको जयेत् ॥ ११ ॥
सिन्धुत्रिकटुराजीभिरार्द्रकेण कफे हित: ।
त्रिफलामधुगण्डूष: कफास्रक्पित्तनाशन: ॥ १२ ॥
दार्वी गुडूची त्रिफलद्राक्षाजात्याश्च पल्लवा: ।
यवासश्चेति तत्क्वाथ: षष्ठांश चौद्रसंयुत: ॥ १३ ॥
शीतो मुखे धृतो हन्यात् मुखपाकं त्रिदोषजम् ।
यस्यौषधस्य गण्डूषस्तस्यैव प्रतिसारणम् ।
कवलश्चापि तस्यैव श्रेयोऽत्र कुशलैर्नरै: ॥ १४ ॥
[कवलो यथा] केसरं मातुलुङ्गस्य सैन्धवोषणसंयुतम् ।
हन्यात् कवलतो जाड्यमरुचिं कफवातजाम् ॥ १५ ॥
कल्कोऽवलेहश्चूर्णञ्च त्रिविधं प्रतिसारणम् ।
अङ्गुल्यग्रप्रणीतञ्च यथास्वं मुखरोगिणाम् ॥ १६ ॥

प्रतिसारं चूर्णं यथा ।

कुष्ठं दार्वी समङ्गा च पाठा तिक्ता च पीतिका ।
तेजनी मुस्तलोध्रञ्च चूर्णं स्यात् प्रतिसारणम् ॥ १७ ॥

तेजनी तेजबल इति लोके

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

रक्तस्रुतं दन्तपीड़ां शोथं दाहञ्च नाशयेत्।
हीनयोगात् कफोत्क्लेशो रसाज्ञानारुची तथा ॥ १८ ॥
अतियोगात् मुखे पाकः शोषः तृष्णाक्लमो भवेत्।
व्याधेरपचयस्तुष्टिः वैशद्यं वक्त्रलाघवम्।
इन्द्रियाणां प्रसादश्च गण्डूषे शुद्धिलक्षणम् ॥ १९ ॥

---

## अथ एकादशोऽध्यायः।

### अथालेपमूर्द्ध तैलकर्ण पूरणविधिः।

आलेपकस्य नामानि लिप्तिर्लेपश्च लेपनम्।
दोषघ्नो विषहा वर्ण्यो मुखालेपस्त्रिधा मतः ॥ १ ॥
त्रिप्रमाणश्चतुर्भागः त्रिभागोऽर्द्धाङ्गुलोन्नतः।
आर्द्रो व्याधिहरः स स्याच्छुष्को दूषयति छविम् ॥ २ ॥
[दोषघ्नो लेपो यथा]पुनर्नवादारुशुण्ठीसिद्धार्थं शिग्रुमेव च।
पिष्ट्वा चैवारनालेन प्रलेपः सर्वशोथजित् ॥ ३ ॥
विभीतफलमज्जस्तु लेपो दाहार्त्तिनाशनः।
शिरीषं मधु यष्टी च तगरं रक्तचन्दनम् ॥ ४ ॥
एला मांसी निशायुग्मं कुष्ठं बालकमेव च।
इति सञ्चूर्ण्य लेपोऽयं पञ्चमांशघृताप्लुतः ॥ ५ ॥
जलेन क्रियते सुज्ञैर्दशाङ्ग इति संज्ञितः।
विसर्पान् विषविस्फोटान् शोथान् दुष्टव्रणान् जयेत् ॥ ६ ॥
सिद्धार्थको वचा हिङ्गुकरञ्जौ देवदारु च।
मञ्जिष्ठा त्रिफला श्वेता कटभिः कटुकत्रयम् ॥ ७ ॥
समांशानिप्रियङ्गुश्च शिरीषो रजनीद्वयम्।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनं ॥ ८ ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा।
अपस्मारविषोन्मादकृत्यादीनां निवारणम् ॥ ९ ॥

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते।
सर्पिरेतेन सिद्धं यत् सगोमूत्रं तदर्थकृत् ॥ १० ॥

[सिद्धार्थकचूर्णम्]

[विषहा लेपो यथा]। अजादुग्धतिलैर्लेपो नवनीतेन संयुतः।
शोथमारुष्करं हन्ति लेपो वा कृष्णमृत्तिलैः ॥ ११ ॥
लाङ्गल्यतिविषालाबूजालिनीमूलबीजकैः।
लेपो धान्याम्बुसंपिष्टः कीटविस्फोटनाशनः ॥ १२ ॥

[वर्ण्यो लेपो यथा] रक्तचन्दनमञ्जिष्ठालोध्रकुष्ठप्रियङ्गवः।
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥ १३ ॥
मातुलुङ्ग जटासर्पिःशिलागोशकृतो रसः।
मुखकान्तिकरो लेपः पिड़काव्यङ्गकीलजित् ॥ १४ ॥
लोध्रधान्यवचालेपस्तारुण्यपीड़कापहः।
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनात्।
सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम् ॥ १५ ॥
व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठावासमाक्षिका।
लेपः सनवनीतो वा श्वेताश्वखुरजा मषी ॥ १६ ॥
अर्कक्षीरहरिद्राभ्यां मर्दयित्वा विलेपनात्।
मुखकार्ष्ण्यं शमं याति चिरकालोद्भवं ध्रुवम् ॥ १७ ॥
वटस्य पाण्डुपत्राणि मालतीरक्तचन्दनम्।
कुष्ठं कालीयकं लोध्रमेभिर्लेपं प्रयोजयेत् ॥ १८ ॥
तारुण्यपिड़का व्यङ्गानीलिकादिविनाशनम्।
पुराणमथ पिण्याकं पुरीषं कुक्कुटस्य च ॥ १९ ॥
मूत्रपिष्टः प्रलेपोऽयं शीघ्रं हन्यादरूषिकाम्।
खदिरारिष्टजम्बूनां त्वग्भिर्वा मूत्रसंयुतैः ॥ २० ॥
कुटजत्वक् सैन्धवञ्च लेपो हन्यादरूषिकाम्।
प्रियालबीजमधुककुष्ठमाषैः ससैन्धवैः ॥ २१ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

कार्य्यो दारुणके मूर्ध्नि प्रलेपो मधुसंयुतः ।
दुग्धेन खाखसं वीजं प्रलेपाद्दारुणं जयेत् ॥ २२ ॥
आम्रवीजस्य चूर्णं तु शिवाचूर्णं समं द्वयम् ।
दुग्धपिष्टः प्रलेपोऽयं दारुणं हन्ति दारुणम् ॥ २३ ॥
रक्तस्तिक्तपटोलस्य पत्राणां तद्विलेपनात् ।
इन्द्रलुप्तं शमं याति त्रिभिरेव दिनैर्ध्रुवम् ॥ २४ ॥
इन्द्रलुप्तापहो लेपो मधुना बृहतीरसः ।
गुञ्जामूलं फलं वापि भल्लातकरसोऽपि वा ॥ २५ ॥ भल्लातकपत्ररस रसोऽप्यत्र ला.
गोक्षुरस्तिलपुष्पाणि तुल्ये च मधुसर्पिषी ।
शिरःप्रलेपनं तेन केशसंवर्द्धनं परम् ॥ २६ ॥
हस्तिदन्तमसीं कृत्वा छागीदुग्धं रसाञ्जनम् ।
निम्बपत्रञ्च मूलं वा कोषासम्पुटके धृतम् ॥ २७ ॥
रोमाणि तेन जायन्ते लेपात् पाणितलेष्वपि ।
यष्टीन्दीवरमृद्वीकातैलाज्यचीरलेपनैः ॥ २८ ॥ इन्दीवर=नीलकमल
इन्द्रलुप्तं शमं याति केशाः स्युः सघना दृढ़ाः ।
चतुःपदानां त्वग्रोमनखशृङ्गास्थिभस्मभिः ॥ २९ ॥
तैलेन सह लेपोऽयं लोमसञ्जननः परः ।
इन्द्रवारुणिकावीजतैलेनाभ्यङ्गमाचरेत् ॥ ३० ॥
प्रत्यहं तेन जायन्ते कुन्तला भृङ्गसन्निभाः ।
अयोरजोभृङ्गराजस्त्रिफला कृष्णमृत्तिका ॥ ३१ ॥
स्थितमिक्षुरसे मासं लेपनात्पलितं जयेत् ।
धात्रीफलत्रयं पथ्ये द्वे तथैकं विभीतकम् ॥ ३२ ॥
पञ्चाम्रमज्जालोहस्य कर्षैकञ्च प्रदीयते ।
पिष्ट्वा लोहमये भाण्डे स्थापयेदुषितं निशि ॥ ३३ ॥
लेपोऽयं हन्ति न चिरादकालपलितं महत् ।
त्रिफला नीलिकापत्रं लौहं भृङ्गरजः समम् ॥ ३४ ॥

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

अविमूत्रेण सम्पिष्टं लेपात् कृष्णीकरं स्मृतम् ।
त्रिफला लोहचूर्णञ्च दाड़िमत्वक् विसं तथा ॥ ३५ ॥
प्रत्येकं पञ्चपलिकं चूर्णं कृत्वा विचक्षणः ।
भृङ्गराजरसस्यापि प्रस्थषट्कं प्रदापयेत् ॥ ३६ ॥
क्षिप्त्वा लोहमये पात्रे भूमिमध्ये निधापयेत् ।
मासमेकं ततः कुर्य्याच्छागीदुग्धेन लेपनम् ॥ ३७ ॥
कूर्चे शिरसि रात्रौ च संवेष्ट्य रण्डपत्रकैः ।
स्वपेत्प्रातस्ततः कुर्य्यात् स्नानं तेन च जायते ॥ ३८ ॥
पलितस्य विनाशश्च त्रिभिर्लेपैर्न संशयः ।
शङ्खचूर्णस्य भागौ द्वौ हरितालस्य भागिकः ॥ ३९ ॥
मनःशिला चार्द्धभागा स्वर्जिका चैकभागिका ।
लेपोऽयं वारिपिष्टस्तु केशानुत्पाट्य दीयते ॥ ४० ॥
अनया लेपयुक्त्या च सप्तवेलं प्रयुक्तया ।
निर्मूलं केशस्थानं स्यात् क्षपणस्य शिरो यथा ॥ ४१ ॥
तालकं शाणयुग्मं स्यात् षट्शाणं शङ्खचूर्णकम् ।
द्विशाणिकं पलाशस्य क्षारं दत्त्वा च मर्दयेत् ॥ ४२ ॥
कदली दण्डतोयेन रविपत्ररसेन वा ।
अस्यापि सप्तभिर्लेपै रोम्णां शातनमुत्तमम् ॥ ४३ ॥
सुवर्णपुष्पीकासीसविड़ङ्गानि मनःशिला ।
रोचना सैन्धवञ्चैव लेपनाच्छित्रनाशनम् ॥ ४४ ॥
वायस्येडगजाकुष्ठकृष्णाभिर्गुटिका कृता ।
वस्तमूत्रेण सम्पिष्टा प्रलेपात् श्वित्रनाशनी ॥ ४५ ॥
तालकं शाणमात्रं स्याच्चतुःशाणा च वाकुची ।
गोमूत्रपिष्टं तच्चूर्णं लेपनात् श्वित्रनाशनम् ॥ ४६ ॥
वाकुची वेतसो लाक्षा काकोडुम्बरिका कणा ।
रसाञ्जनमयश्चूर्णं तिलाः कृष्णास्तदेकतः ॥ ४७ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

चूर्णयित्वा गवाम्पित्तैः पिष्ट्वा च गुटिका कृता ।
अस्याः प्रलेपात् श्वित्राणि प्रणश्यन्त्यतिवेगतः ॥ ४८ ॥
धात्रीसर्जरसश्चैव यवक्षारश्च चूर्णितः ।
सौवीरेण प्रलेपोऽयं प्रयोज्यः सिध्मनाशनः ॥ ४९ ॥
दार्वीमूलकबीजानि तालकं सुरदारु च ।
ताम्बूलपत्रं सर्वाणि कार्षिकाणि पृथक् पृथक् ॥ ५० ॥
शङ्खचूर्णं शाणमात्रं सर्वाण्येकत्र कारयेत् ।
लेपोऽयं वारिणा पिष्टः सिध्मानां नाशनः परः ॥ ५१ ॥
हरीतकी सैन्धवञ्च गैरिकञ्च रसाञ्जनम् ।
विड़ालको जलैः पिष्टः सर्वनेत्रामयापहः ॥ ५२ ॥
रसाञ्जनं व्योषयुतं सम्पिष्य वटकीकृतम् ।
कण्डूं पाकान्वितां हन्ति लेपादञ्जननामिकाम् ॥ ५३ ॥
प्रपुन्नाड़स्य बीजानि वाकुची सर्षपास्तिलाः ।
कुष्ठं निशाद्वयं मुस्तं पिष्ट्वा तक्रेण चैकतः ॥ ५४ ॥
प्रलेपादस्य नश्यन्ति दद्रूकण्डूविचर्चिकाः ।
हेमक्षीरीविड़ङ्गानि दरदं गन्धकस्तथा ॥ ५५ ॥
दद्रुघ्नः कुष्ठसिन्दूरं सर्वाण्येतानि मर्दयेत् ।
धत्तूरनिम्ब-ताम्बूलपत्राणां स्वरसैः पृथक् ॥ ५६ ॥
अस्य त्रिलेपमात्रेण पामादद्रूविचर्चिकाः ।
कण्डूश्चारकसा चैव प्रशमं यान्ति वेगतः ॥ ५७ ॥
दूर्वाभया सैन्धवञ्च चक्रमर्दः कुठेरकः ।
एभिस्तक्रयुतो लेपः कण्डूदद्रूविनाशनः ॥ ५८ ॥
दूर्वानिशायुग्मलेपः कण्डूपामाविनाशनः ।
कृमिदद्रूहरश्चैव शीतपित्तापहः स्मृतः ॥ ५९ ॥
सिद्धार्थरजनीकुष्ठैः प्रपुन्नाटतिलैः सह ।
कटुतैलेन सम्मिश्रं दद्रूघ्नञ्च प्रलेपनम् ॥ ६० ॥



CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

रास्ना नीलोत्पलं दारु चन्दनं मधुकं बला ।
घृतक्षीरयुतो लेपो वातवीसर्पनाशनः ॥ ६१ ॥
मृणालं चन्दनं लोध्रमुशीरं कमलोत्पलम् ।
सारिवामलकीपथ्यालेपः पित्तविसर्पनुत् ॥ ६२ ॥
त्रिफलापद्मकोशीरसमङ्गाकरवीरकम् ।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥ ६३ ॥
मांसी सर्जरसो लोध्रं मधुकं सहरेणुकम् ।
मूर्वा नीलोत्पलं पद्मशिरीषकुसुमैः सह ॥ ६४ ॥
प्रलेपः पित्तवातास्रे शतधौतघृताप्लुतः ।
आमलं घृतभृष्टन्तु पिष्टं काञ्जिकवारिभिः ॥ ६५ ॥
जयेन्मूर्द्ध प्रलेपेन रक्तं नासिकया स्रुतम् ।
कुष्ठमेरण्डतैलेन लेपात् काञ्जिकपेषितम् ॥ ६६ ॥
शिरोऽर्त्तिं वातजां हन्यात् पुष्पं वा मुचुकुन्दजम् ।
देवदारु नतङ्कुष्ठं नलदं विश्वभेषजम् ॥ ६७ ॥
सकाञ्जिकः स्नेहयुक्तो लेपो वातशिरोऽर्त्तिनुत् ।
चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः ॥ ६८ ॥
क्षीरपिष्टैः प्रलेपः स्याद्रक्तपित्तशिरोऽर्त्तिजित् ।
धात्रीकसेरुक्षीविरपद्मपद्मकचन्दनैः ॥ ६९ ॥
दूर्वोशीरनलानाञ्च मूलैः कुर्य्यात् प्रलेपनम् ।
शिरोऽर्त्तिं पित्तजां हन्याद्रक्तपित्तरुजं तथा ॥ ७० ॥
हरेणुनतशैलेयमुस्तैलागुरुदारुभिः ।
मांसीरास्नोरुवूकैश्च लेपः श्लेष्मशिरोऽर्त्तिनुत् ॥ ७१ ॥
शुण्ठीकुष्ठप्रपुन्नाटदेवकाष्ठसरोहिषैः ।
सुखोष्णैर्विहितस्तद्वल्लेपः श्लेष्मशिरोऽर्त्तिनुत् ॥ ७२ ॥
सारिवाकुष्ठमधुकवचाकृष्णोत्पलैस्तथा ।
लेपः सकाञ्जिकः स्नेहः सूर्य्यावर्त्तार्द्धवेधयोः ॥ ७३ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

रक्तचन्दनमञ्जिष्ठानिशामधुकगैरिकैः ।
क्षीरेण विद्रधौ लेपो रक्तागन्तुनिमित्तजे ॥ ९९ ॥
निचुलः शिग्रुवीजानि दशमूलमथापि वा ।
प्रदेहो वातगण्डेषु सुखोष्णः सम्प्रदीयते ॥ १०० ॥
देवदारु विशाले च कफगण्डे प्रदेहकः ।
सर्षपारिष्टपत्राणि दग्ध्वा भल्लातकैः सह ॥ १०१ ॥
छागमूत्रेण संस्पृष्टमपचीघ्नं प्रलेपनम् ।
सर्षपान् शिग्रुवीजानि शणवीजातसीयवान् ॥ १०२ ॥
मूलकस्य च वीजानि तक्रेणाम्लेन पेषयेत् ।
गण्डमालार्बुदं गण्डं लेपेनानेन शाम्यति ॥ १०३ ॥
मर्दयित्वा चुरणाङ्गं केवलानिलपीड़ितम् ।
तनुप्रलेपं दद्याच्च पिष्टगुञ्जाफलैः कृतम् ॥ १०४ ॥
तेनापबाहुजा पीड़ा विश्वाची गृध्रसी तथा ।
अन्यापि वातजा पीड़ा प्रशमं याति वेगतः ॥ १०५ ॥
धत्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् ॥ १०६ ॥
अजाजीहपुषा कुष्ठमेरण्डवदरान्वितम् ।
काञ्जिकेन तु सम्पिष्टं कुरण्डघ्नं प्रलेपनम् ॥ १०७ ॥
करवीरस्य मूलेन परिपिष्टेन वारिणा ।
असाध्योऽपि व्रजत्यस्तं लिङ्गोत्था रुक् प्रलेपनात् ॥ १०८ ॥
दहेत्कटाहे त्रिफलां तां मषीं मधुसंयुताम् ।
उपदंशप्रलेपोऽयं सद्यो रोपयति व्रणम् ॥ १०९ ॥
रसाञ्जनं शिरीषेण पथ्यया च समन्वितम् ।
सक्षौद्रं लेपनं योज्यमुपदंशगदापहम् ॥ ११० ॥
विम्बिणीत्वक्मषीचूर्णमुपदंशगदापहम् ।
अग्निदग्धे तुगाक्षीरीप्लक्षगैरिकचन्दनैः ॥ १११ ॥

CCO, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

साम्रतैः सर्पिषा स्निग्धैः स्वालेपं कारयेद्भिषक्।
तिन्दुकीत्वक्कषायैर्वा घृतमिश्रैः प्रलेपयेत् ॥ ११२ ॥
यवान् दग्ध्वा मषी कार्य्या तैलेन युतया तया।
दद्यात्सर्वाग्निदग्धेषु प्रलेपो व्रणरोपणः ॥ ११३ ॥
पलाशोडुम्बरफलैस्तिलतैलसमन्वितैः।
मधुना योनिमालिप्य गाढ़ीकरणमुत्तमम् ॥ ११४ ॥
माकन्दमूलसंयुक्तमधुकर्पूरलेपनात्।
गतेऽपि यौवने स्त्रीणां योनिर्गाढ्यतिजायते ॥ ११५ ॥
मरिचं सैन्धवं कृष्णा तगरं वृहतीद्वयम्।
अपामार्गस्तिलाः कुष्ठं यवा माषाश्च सर्षपाः ॥ ११६ ॥
अश्वगन्धा च तच्चूर्णं मधुना सह योजयेत्।
अस्य सन्ततलेपेन मर्दनाच्च प्रजायते ॥ ११७ ॥
लिङ्गवृद्धिः स्तनोत्सेधः संहतिर्भुजकर्णयोः।
सिताश्वगन्धा सिन्धूच्छागक्षीरैर्घृतं पचेत् ॥ ११८ ॥
तल्लेपान्मर्दनाल्लिङ्गे वृद्धिः सञ्जायते परा।
कर्पूरपूरणान्नित्यं स्थूलः स्याच्च प्रजापतिः ॥ ११९ ॥
काकजङ्घा जयन्ती च कर्पूरं पूरणादपि।
शिश्नमुत्थापनं कुर्य्याद्रासभस्य यथा तथा ॥ १२० ॥
हयगन्धा सुभल्लातवीजं कर्पूरमामलम्।
महिषीनवनीतेन मर्दयेत् प्रत्यहं पुनः ॥ १२१ ॥
शिश्नमुत्थापनं कुर्य्यात् स्थूलं हयखरोपमम्।
इन्द्रवारुणिकापत्ररसैः सूतं विमर्दयेत् ॥१२२॥
रक्तस्य करवीरस्य काष्ठेन च मुहुर्मुहुः।
तल्लिप्तलिङ्गसम्भोगात् योनिद्रावोऽतिजायते ॥१२३॥ योनिद्रावणं
ताम्बूलपत्रचूर्णन्तु चूर्णं कुष्ठशिवाभवम्।
वारिणा लेपनं कुर्य्याद्गात्रदौर्गन्ध्यनाशनम् ॥ १२४ ॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

कुलत्थसक्तवः कुष्ठं मांसी चन्दनजं रजः।
सक्तवश्चणकस्यैव त्वक् चैवैकत्र कारयेत् ॥ १२५ ॥
स्वेददौर्गन्ध्यनाशश्च जायेता स्यावधूलनात्।
वचा सौवर्चलं कुष्ठरजन्यौ मरिचानि च ॥ १२६ ॥
एतल्लेपप्रभावेण वशीकरणमुत्तमम्।
वदरीकेशमादाय हस्तार्के गुरुपुष्ययोः ॥ १२७ ॥
मूलार्के भृगुरेवत्यां भौमाश्विन्यां शुभे दिने।
बुधानुराधानक्षत्रे सोमश्रवणसंयुगे ॥ १२८ ॥
कदाचित् स्वातिरोहिण्यां मध्यरात्रौ विशेषतः।
कृष्णपक्षे चतुर्दश्यामष्टम्यामेकदा क्वचित् ॥ १२९ ॥
कर्पूरं निक्षिपेत्तत्र रजकस्य शिलोपरि।
नग्नवेषधरो भूत्वा सन्ध्याकाले ततोऽन्यदा ॥ १३० ॥
ताम्बूलं दीयते यस्यास्तत् कर्पूरयुतं पुनः।
सावश्यञ्जायते नूनं यावज्जीवं शिवोदितम् ॥ १३१ ॥ वशीकरणलेपः

[मूर्द्धतैलम्] अभ्यङ्गः परिषेकश्च पिचुर्वस्तिरिति क्रमात्।
मूर्द्धतैलं चतुर्द्धा स्याद्बलवच्च यथोत्तरम ॥ १३२ ॥
वयोऽभ्यङ्गादयः सर्वे प्रसिद्धाः सर्वतः स्मृताः।
शिरोवस्तिविधिश्चात्र प्रोच्यते सुश्रुसम्मतः ॥ १३३ ॥
शिरोवस्तिश्चर्मणः स्याद् द्विमुखो द्वादशाङ्गुलः।
शिरःप्रमाणस्तं बद्धा मस्तके माषपिष्टकैः ॥ १३४ ॥
सन्धिरोधं विधायास्मिन् स्नेहैः कोष्णैः प्रपूरयेत्।
तावद्धार्य्यस्तु यावत् स्यान्नासाकर्णमुखस्रुतिः ॥ १३५ ॥
वेदनोपशमो वापि मात्राणां वा सहस्रकम्।
विना भोजनमेवात्र शिरोवस्तिः प्रशस्यते ॥ १३६ ॥
प्रयोज्यस्तु शिरोवस्तिः पञ्चसप्ताहमेव वा।
विमोच्य शिरसो वस्तिं गृह्णीयाच्च समन्ततः ॥ १३७ ॥

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

ऊर्द्ध्वकायं ततः कोष्णनीरैः स्नानञ्च कारयेत् ।
अनेन दुर्जया रोगा वातजा यान्ति संक्षयम् ।
शिरःकम्पादयस्तेन सर्वकालेषु युज्यते ॥ १३८ ॥
[कर्णपूरणम्] स्वेदयेत्कर्णमूले तु किञ्चिन्नुःपार्श्वशायिनः ।
मूत्रैः स्नेहैः रसैः कोष्णैस्ततः श्रोत्रं प्रपूरयेत् ॥ १३९ ॥
कर्णञ्च पूरितं रक्षेच्छतं पञ्च शतानि च ।
सहस्रं वापि मात्राणां श्रोत्रकण्ठशिरोगदे ॥ १४० ॥
स्वजानुतः करावर्त्तं कुर्य्याच्छोटिकया युतम् ।
एषा मात्रा भवेदेका सर्वत्रैवैष निश्चयः ॥ १४१ ॥
रसाद्यैः पूरणं कर्णे भोजनात्प्राक् प्रशस्यते ।
तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥ १४२ ॥
[सद् यथा] पीतार्कपत्रमाज्येन लिप्तं वह्नौ प्रतापयेत् ।
तद्रसः श्रवणे क्षिप्ता कर्णशूलहरः परः ॥ १४३ ॥
कर्णशूलातुरे कोष्णं छागमूत्रं ससैन्धवम् ।
निःक्षिपेत्तेन शाम्यन्ति शूलपाकादिका रुजः ॥ १४४ ॥
शृङ्गवेरञ्च मधुकं सैन्धवं तैलमेव च ।
कदूष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥ १४५ ॥
कपित्थमातुलुङ्गाम्लशृङ्गवेररसैः शुभैः ।
सुखोष्णैः पूरयेत् कर्णं कर्णशूलोपशान्तये ॥ १४६ ॥
अर्काङ्कुरानम्लपिष्टांस्तैलाक्तान् लवणान्वितान् ।
सन्निदध्यात् स्नुहीकाण्डे कोरितेः तच्छदावृते ॥ १४७ ॥
पुटपाकक्रमं कृत्वा रसैस्तस्य प्रपूरयेत् ।
सुखोष्णैस्तेन शाम्यन्ति कर्णपीड़ाः सुदारुणाः ॥ १४८ ॥
महतः पञ्चमूलस्य काण्डान्यष्टाङ्गुलानि च ।
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥ १४९ ॥
यत्तैलञ्चवते तेभ्यः सुखोष्णं तेन पूरयेत् ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

वटो नीलोत्पलं दूर्वा तिला कृष्णा पुनर्नवा ।
शङ्केऽनन्तवाते च लेपः सर्वशिरोऽर्त्तिं नुत् ॥ ७४ ॥
अथ लेपविधिस्त्वन्यः प्रोच्यते सुज्ञसम्मतः ।
द्वौ तस्य कथितौ भेदौ प्रलेपाख्यप्रदेहकौ ॥ ७५ ॥
चर्मार्द्रं माहिषं यद्वत्प्रोन्नतं संमितिस्तयोः ।
शीतस्तनुर्विशोषी च प्रलेपः परिकीर्त्तितः ॥ ७६ ॥
आर्द्रो घनस्तथोष्णः स्यात्प्रदेहः श्लेष्मवातहः ।
रोमाभिमुखमादेयौ प्रलेपाख्य प्रदेहकौ ॥ ७७ ॥
वीर्य्यं सम्यक् विशत्याशु रोमकूपैः शिरामुखैः ।
न रात्रौ लेपनं कुर्य्यात् शुष्यमाणं न धारयेत् ॥ ७८ ॥
शुष्यमाणमुपेक्षेत प्रदेहं पीड़नं प्रति ।
तमसा पिहितोऽल्युष्मा रोमकूपमुखे स्थितः ॥ ७९ ॥
विना लेपेन निर्याति रात्रौ नालेपयेदतः ।
रात्रावपि प्रलेपादिविधिः कार्य्यो विचक्षणैः ॥ ८० ॥
अपक्वशोथे गम्भीरे रक्तश्लेष्मसमुद्भवे ।
आदौ शोथहरो लेपो द्वितीयो रक्तसेचनः ॥ ८१ ॥
तृतीयश्चोपनाहः स्यात् चतुर्थः पाचनक्रमः ।
पञ्चमः शोधनो भूयात् षष्ठो रोपण इष्यते ।
सप्तमो वर्णकरणो व्रणस्येति क्रमा मताः ॥ ८२ ॥
[स यथा] वीजपूरजटाहिंस्रा देवदारु महौषधम् ।
रास्नाग्निमन्थलेपोऽयं वातशोथविनाशनः ॥ ८३ ॥
मधुकं चन्दनं दूर्वानलमूलञ्च पद्मकम् ।
उशीरं बालकं पद्मं पित्तशोथे प्रलेपनम् ॥ ८४ ॥
कृष्णा पुराणपिण्याकं शिग्रुत्वक् सिकताशिवाः ।
मूत्रपिष्टः सुखोष्णोऽयं प्रदेहः श्लेष्मशोथहा ॥ ८५ ॥
द्वे निशे चन्दने द्वे च शिवा दूर्वा पुनर्नवा ।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

उशीरं पद्मकं लोध्रं गैरिकञ्च रसाञ्जनम्।
आगन्तुजे रक्तजे च शोथे कुर्य्यात् प्रलेपनम्॥ ८६॥
शणमूलकशिग्रूणां फलानि तिलसर्षपाः।
सक्तवः किण्वमतसी प्रदेहः पाचनः स्मृतः॥ ८७॥
दन्तीचित्रकमूलत्वक्स्नुह्यर्कपयसा गुडैः।
भल्लातकास्थिकासीससैन्धवैर्दारणः स्मृतः॥ ८८॥
चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः।
कपोतकङ्कगृध्राणां मलं लेपेन दारुणम्॥ ८९॥
स्वर्जिका यावशूकाद्याः क्षारा लेपेन दारुणाः।
हेमक्षीर्य्यास्तथा लेपो व्रणे परमदारुणः॥ ९०॥
तिलसैन्धवयष्ट्याह्वनिम्बपत्रनिशायुगैः।
त्रिवृत् घृतयुतैः पिष्टैः प्रलेपो व्रणशोधनः॥ ९१॥
निम्बपत्रघृतक्षौद्रदार्वीमधुकसंयुतः।
तिलैश्च सह संयुक्तो लेपः शोधनरोपणः॥ ९२॥
करञ्जारिष्टनिर्गुण्डीलेपो हन्याद् व्रणक्रमीन्।
लशुनस्याथ वा लेपो हिङ्गुनिम्बभवोऽथवा॥ ९३॥
निम्बपत्रं तिला दन्ती त्रिवृत्सैन्धवमाक्षिकम्।
दुष्टव्रणप्रशमनो लेपः शोधनरोपणः॥ ९४॥
मदनस्य फलं तिक्तां पिष्ट्वा काञ्जिकवारिणा।
कोष्णं कुर्य्यान्नाभिलेपं शूलशान्तिर्भवेत्ततः॥ ९५॥
शिग्रुशेफालिकैरण्डयवगोधूममुद्गकैः।
सुखोष्णो बहुलो लेपः प्रयोज्यो वातविद्रधौ॥ ९६॥
पैत्तिके सर्पिषा लाजामधुकैः शर्करान्वितैः।
प्रलिम्पेत् क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः॥ ९७॥
इष्टिकासिकतालोहकिट्टं गोशकृता सह।
सुखोष्णः स्यात्प्रदेहोऽयं मूत्रैः स्यात् श्लेष्मविद्रधौ॥ ९८॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम् ॥ १५० ॥
एवं स्याद्दीपिकातैलं कुष्ठदेवतरोस्तथा ।
तैलं श्योनाकमूलेन मन्देऽग्नौ परिपाचितम् ।
हरेदाशु त्रिदोषोत्थं कर्णशूलं प्रपूरणात् ॥ १५१ ॥
कल्कक्वाथेन यष्ट्याह्वकाकोलीमाषधान्यकैः ।
शूकरस्य वसा पक्वा कर्णनादार्त्तिनाशिनी ॥ १५२ ॥
स्वर्जिकामूलकं शुष्कं हिङ्गुकृष्णासमन्वितम् ।
शतपुष्पा च तैस्तैलं पक्वं सुक्तचतुर्गुणम् ।
प्रणादं शूलबाधिर्य्यं स्रावं कर्णस्य नाशयेत् ॥ १५३ ॥
अपामार्गक्षारजले तत् क्षारं कल्कितं क्षिपेत् ।
तेन पक्वं जयेत्तैलं बाधिर्य्यं कर्णनादकम् ॥ १५४ ॥
शम्बूकस्य तु मांसेन पचेत्तैलं सुसार्षपम् ।
तस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति ॥ १५५ ॥
चूर्णपञ्चकषायाणां कपित्थरसमेव च ।
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ॥ १५६ ॥
तिन्दुकान्यभया लोध्रं समङ्गा चामलक्यपि ।
ज्ञेयाः पञ्चकषायास्तु कर्मण्यस्मिन् भिषग्वरैः ॥ १५७ ॥
स्वर्जिकाचूर्णसंयुक्तं बीजपूररसं क्षिपेत् ।
कर्णस्रावरुजा दाहाः प्रणश्यन्ति न संशयः ॥ १५८ ॥
आम्रजम्बूः प्रवालानि मधूकस्य वटस्य च ।
एभिः संसाधितं तैलं पूतिकर्णप्रशान्तिकृत् ॥ १५९ ॥
पूरणं हरितालेन गवां मूत्रयुतेन च ।
अथवा सार्षपं तैलं कर्णकीटहरं परम् ॥ १६० ॥
स्वरसं शिग्रुमूलस्य सूर्य्यावर्त्तं रसं तथा ।
त्र्यूषणं चूर्णितञ्चैव कपिकच्छूजटारसम् ॥ १६१ ॥
एकीकृत्य क्षिपेत्कर्णे र्क्तिकीटहरं परम् ।

CCO, Gurukul Kangri Collection, Haridwar; Digitized by eGangotri

सद्यो हिङ्गु निहन्त्याशु कर्णकीटं सुदारुणम् ॥ १६२ ॥

अथ द्वादशोऽध्यायः ।

[शोणितस्रावविधिः] शोणितं स्रावयेज्जन्तोरामयं प्रसमीच्य च
प्रस्थं प्रस्थार्द्धकं वापि प्रस्थार्द्धार्द्धमथापि वा ॥ १ ॥
शरत्काले स्वभावेन कुर्य्याद्रक्तस्रुतिं नरः ।
त्वग्दोषग्रन्थिशोथाद्यानस्यू रक्तस्रुतेर्यतः ॥ २ ॥
मधुरं वर्णतो रक्तमशीतोष्णं तथा गुरुः ।
शोणितं स्निग्धविस्रं स्याद्विदाहश्चास्य पित्तवत् ॥ ३ ॥
विस्रता द्रवता रागश्चलनं विलयस्तथा ।
भूम्यादिपञ्चभूतानामिते रक्तगुणाः स्मृताः ॥ ४ ॥
रक्ते दुष्टे वेदना स्यात् पाको दाहश्च जायते ।
रक्तमण्डलताकण्डूः शोथश्च पीड़कोद्गमः ॥ ५ ॥
वृद्धे रक्ताङ्गनेत्रत्वं शिराणां पूरणं तथा ।
गात्राणां गौरवं निद्रा मदो दाहश्च जायते ॥ ६ ॥
क्षीणेऽम्लमधुराकाङ्क्षा मूर्च्छा त्वचि विरूक्षिता ।
शैथिल्यञ्च शिराणां स्याद्वातादुन्मार्गगामिता ॥ ७ ॥
अरुणं फेनिलं रूक्षं परुषं तनु शीघ्रगम् ।
अस्कन्दि सूचीनिस्तोदि रक्तं स्याद्वात-दूषितम् ॥ ८ ॥
पित्तेन पीतं हरितं नीलं श्यावञ्च विस्रुतम् ।
अस्कन्दमुष्णं मक्षिकाणां पिपीलानामनिष्टकम् ॥ ९ ॥
शीतलं बहुलं स्निग्धं गैरिकोदकसन्निभम् ।
मांसपेशीप्रभं स्कन्दिमन्दगं कफदूषितम् ॥ १० ॥
द्विदोषदुष्टं संसृष्टं त्रिदुष्टं पूतिगन्धकम् ।
सर्वलक्षणसंयुक्तं काञ्जिकाभञ्च जायते ॥ ११ ॥
विषदुष्टं भवेच्छ्रावं नासिकोन्मार्गगन्तथा ।
विस्रं काञ्जिकसङ्काशं सर्वकुष्ठकरं तथा ॥ १२ ॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

इन्द्रगोपप्रभं ज्ञेयं प्रकृतिस्थमसंहतम्।
शोथे दाहेऽङ्गपाके च रक्तवर्णेऽसृजः स्रुतौ॥ १३॥
वातरक्ते तथा कुष्ठे सपीडे दुर्जयेऽनिले।
पामारोगे श्लीपदे च विषदुष्टे च शोणिते॥ १४॥
ग्रन्थ्यर्वुदापचीक्षुद्ररोगरक्ताधिमन्थिषु।
विदारीस्तनरोगेषु गात्राणां सादगौरवे॥ १५॥
रक्ताभिष्यन्द तन्द्रायां पूतिघ्राणास्य देहके।
यकृत्प्लीहविसर्पेषु विद्रधौ पीड़कोद्गमे॥ १६॥
कर्णोष्ठघ्राणवक्त्राणां पाके दाहे शिरोरुजि।
उपदंशे रक्तपित्ते रक्तस्रावः प्रशस्यते॥ १७॥
एषु रोगेषु शृङ्गैर्वा जलौकालावुकैरपि।
अथवापि शिरामोक्षैः कुर्य्याद्रक्तस्रुतिं नरः॥ १८॥
न कुर्वीत शिरामोक्षं कृशस्यातिव्यवायिनः।
क्लीवस्य भीरोर्गर्भिण्याः सूतिका पाण्डुरोगिणाम्॥१९॥
पञ्चकर्मविशुद्धस्य पीतस्नेहस्य चार्शसाम्।
सर्वाङ्गशोथयुक्तानामुदरिश्वासकासिनाम्॥ २०॥
छर्द्यतीसारदुष्टानामतिस्विन्नतनोरपि।
ऊनषोड़शवर्षस्य गतसप्ततिकस्य च॥ २१॥
आघातस्रुतरक्तस्य शिरामोक्षो न शस्यते।
एषां चात्ययिके रोगे जलौकाभिस्तु निर्हरेत्॥ २२॥
तथाच विषदुष्टानां शिरामोक्षोऽपि शस्यते। विषदुष्टानां इ॰पा॰
गोशृङ्गेण जलौकाभिरलावूभिरपि त्रिधा॥ २३॥
वातपित्तकफैर्दुष्टं शोणितं स्रावयेद् बुधः।
द्विदोषाभ्यां तु संदुष्टं त्रिदोषैरपि दूषितम्॥ २४॥
शोणितं स्रावयेद्युक्त्या शिरामोक्षैः पदैस्तथा।
गृह्णाति शोणितं शृङ्गं दशाङ्गुलमितं बलात्॥ २५॥

द्विदोषाभ्यां दुष्टं रक्तं पच्छाङ्गैः, त्रिदोषदूषितं शिरामोक्षैः, पदैः स्रावयेत्

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

जलौका हस्तमात्रं तु तुम्बी च द्वादशाङ्गुलम् ।
पदमङ्गुलमात्रस्थं शिरा सर्वाङ्गशोधिनी ॥ २६ ॥
शीते निरभ्रे मूर्च्छार्त्ति निद्राभीतिमदश्रमैः ।
युतानां न स्रवेद्रक्तं तथा विण्मूत्र सङ्गिनाम् ॥ २७ ॥
अप्रवर्त्तितरक्ते च कुष्ठत्रिकटुसैन्धवैः ।
मर्दयेद् व्रणवक्त्रं च तेन सम्यक् प्रवर्त्तते ॥ २८ ॥
तस्मान्न शीतेनात्युष्णे नातिस्विन्ने ऽतितापिते ।
पीत्वा यवागूं तृप्तस्य स्रावयेच्छोणितं बुधः ॥ २९ ॥
अतिस्विन्नस्योष्णकाले तथैवातिशिराव्यधात् ।
अतिप्रवर्त्तते रक्तं त[न] कुर्य्यात्प्रतिक्रियाम् ॥ ३० ॥
अतिप्रवृत्ते रक्ते च लोध्रसर्जरसाञ्जनैः ।
यवगोधूमचूर्णैर्वा धवधन्वनगैरिकैः ॥ ३१ ॥
सर्पनिर्मोक चूर्णैर्वा भस्मना क्षौमवस्त्रयोः ।
मुखं व्रणस्य बद्ध्वा च शीतैश्चोपचरेद् व्रणम् ॥ ३२ ॥
विध्येदूर्द्ध्वं शिरां ताञ्च दहेत् क्षारेण वाग्निना ।
व्रणं कषायः सन्धत्ते रक्तं स्कन्दयते हिमम् ।
व्रणास्यं पाचयेत् क्षारो दाहः सङ्कोचयेच्छिराम् ॥३३॥
[स यथा दाहः] वामाण्डशोथे दक्षस्य करस्याङ्गुष्ठमूलजाम् ।
दहेच्छिरां व्यत्यये तु वामाङ्गुष्ठशिरां दहेत् ॥ ३४ ॥
शिरादाहप्रभावेण मुष्कशोथः प्रणश्यति ।
विसूच्यां पार्ष्णिदाहेन जायतेऽग्नेः प्रदीपनम् ॥ ३५ ॥
सङ्कुचन्ति यतस्तेन रसश्लेष्मवहाः शिराः ।
यदा छिन्नैर्यकृत्प्लीह्नोः शिशोः सञ्जायतेऽसृजः ॥ ३६ ॥
तदा तत् स्थानदाहेन सङ्कुचन्त्यसृजः शिराः ।
रक्ते दुष्टेऽवशिष्टेऽपि व्याधिर्नैव प्रकुप्यति ॥ ३७ ॥
अतः स्थेयं सावशेषे रक्ते नातिक्रमो हितः ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

अल्पमाक्षेपकं तृष्णां तिमिरं शिरसो रुजम् ॥ ३८ ॥
पक्षाघातं श्वासकासौ हिक्कां दाहञ्च पाण्डुताम् ।
कुरुतेऽतिस्रुतं रक्तं मरणं वा करोति च ॥ ३९ ॥
देहस्योत्पत्तिरसृजा देहस्तेनैव धार्य्यते ।
विना तेन व्रजेज्जीवो रक्षेद्रक्तमतो बुधः ॥ ४० ॥
शीतोपचारैः कुपिते स्रुतरक्तस्य मारुते ।
कोष्णेन सर्पिषा शोथं सव्यथं परिषेचयेत् ॥ ४१ ॥
क्षीरस्यैणशशोरभ्रहरिणच्छागमांसजः ।
रसः समुचितः पाने क्षीरं वा षष्टिका हिता ॥ ४२ ॥
पीड़ाशान्तिर्लघुत्वञ्च व्याधेरुद्रेकसंक्षयः ।
मनःस्वास्थ्यं भवेच्चिह्नं सम्यग्विस्राविते सृजि ॥ ४३ ॥
व्यायामं मैथुनं क्रोधशीतस्नानप्रवातकान् ।
एकाशनं दिवास्वप्नं क्षाराम्लकटुभोजनम् ।
शोकं वादमजीर्णं च त्यजेदाबलदर्शनात् ॥ ४४ ॥

---

## अथ त्रयोदशोऽध्यायः ।

[नेत्रप्रसादनकर्माणि]सेक आश्चोतनं पिण्डी विडालस्तर्पणं तथा ।
पुटपाकोऽञ्जनं चैभिः कल्कैर्नेत्रमुपाचरेत् ॥ १ ॥
सेकस्तु सूक्ष्मधाराभिः सर्वस्मिन्नयने हितः ।
मीलिताक्षस्य मर्त्यस्य प्रदेयश्चतुरङ्गुलः ॥ २ ॥
स चापि स्नेहनो वाते रक्ते पित्ते च रोपणः ।
लेखनश्च कफे कार्य्यस्तस्य मात्राऽधुनोच्यते ॥ ३ ॥
षड्वाक्शतैः स्नेहनेषु चतुर्भिश्चैव रोपणे ।
वाक्शतैश्च त्रिभिः कार्य्यः सेको लेखनकर्मणि ।
कार्य्यस्तु दिवसे सेको रात्रौ चात्यन्तिके गदे ॥ ४ ॥
[स यथा] एरण्डत्वक्पत्रमूलैः शृतमाजं पयो हितम् ।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

सुखोष्णं सेचनं नेत्रे वाताभिष्यन्दनाशनम् ॥ ५ ॥
परिषेको हितं नेत्रे पयः कोष्णं ससैन्धवम्।
रजनी दारुसिद्धं वा सैन्धवेन समन्वितम् ॥ ६ ॥
वाताभिष्यन्दशमनं हितं स्यान्मारुत पर्य्ययै।
शुष्काक्षिपाके च हितमिदं सेचनकं सदा ॥ ७ ॥
सावरं मधुकं तुल्यं घृतभृष्टसुचूर्णितम्।
छागक्षीरे स्थितं सेकात्पित्तरक्ताभिघातजित् ॥ ८ ॥
त्रिफलालोध्रयष्टीभिः शर्कराभद्रमुस्तकैः।
पिष्टैः शीताम्बुना सेको रक्ताभिष्यन्दनाशनः ॥ ९ ॥
लाक्षामधुकमञ्जिष्ठा लोध्रकालानुसारिवा।
पुण्डरीकयुतः सेको रक्ताभिष्यन्दनाशनः ॥ १० ॥
श्वेतं लोध्रं घृते भृष्टं चूर्णितं पटविस्तुतम्।
उष्णाम्बुना विमृदितं सेकाच्छूलघ्नमम्बके ॥ ११ ॥

[अथ आश्चोतनम्] अथाश्चोतनकं कार्य्यं निशायां न कथञ्चन।
उन्मीलितेऽक्षिटक्मध्ये विन्दुभिर्द्व्यङ्गुलाद्धितम् ॥१२॥
विन्दवोऽष्टौ लेखनेषु स्नेहने दश विन्दवः।
रोपणे द्वादश प्रोक्तास्ते शीते कोष्णरूपिणः ॥ १३ ॥
उष्णे च शीतरूपाः स्युः सर्वत्रैवैष निश्चयः।
वाते तिक्तं तथा स्निग्धं पित्ते मधुरशीतलम् ॥ १४ ॥
तिक्तोष्णरूक्षञ्च कफे क्रमादाश्चोतनं हितम्।
आश्चोतनानां सर्वेषां मात्रा स्याद्वाक्शतं हिता ॥ १५ ॥
निमेषोन्मेषणं पुंसामङ्गुल्या छोटिकाऽथवा।
गुर्वक्षरोच्चारणं वा वाङ्मात्रेयं स्मृता बुधैः ॥ १६ ॥

[तद्यथा] विल्वादिपञ्चमूलेन वृहत्येरण्डशिग्रुभिः।
क्वाथ आश्चोतनं कोष्णो वाताभिष्यन्दनाशनः ॥ १७ ॥
अम्बुपिष्टैर्निम्बपत्रैस्त्वचं लोध्रस्य लेपयेत्।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

प्रताप्य वह्निना पिष्ट्वा तद्रसो नेत्रपूरणात् ॥ १८ ॥
वातोत्थं रक्तपित्तोत्थमभिष्यन्दं विनाशयेत् ।
त्रिफलाश्चोतनं नेत्रे सर्वाभिष्यन्दनाशनम् ॥ १९ ॥
स्त्रीस्तन्याश्चोतनं नेत्रे रक्तपित्तानिलार्त्तिजित् ।
क्षीरसर्पिर्घृतं वापि वातरक्तरुजं जयेत् ॥ २० ॥
[अथ पिण्डिका] पिण्डिका वलिका प्रोक्ता बध्यते पट्टवस्त्रकैः ।
नेत्राभिष्यन्दयोग्या सा व्रणेष्वपि निबध्यते ॥ २१ ॥
अभिष्यन्दाधिमन्थे च सञ्जाते श्लेष्मसम्भवे ।
स्निग्धस्विन्नोत्तमाङ्गस्य शिरस्तीक्ष्णैर्विरेचयेत् ॥ २२ ॥
अधिमन्थेषु सर्वेषु ललाटे वेधयेच्छिराम् ।
अशान्ते सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ॥ २३ ॥
अभिष्यन्देषु सर्वेषु बध्नीयात्पिण्डिकां बुधः ।
वाताभिष्यन्दशान्त्यर्थं स्निग्धोष्णा पिण्डिका भवेत् ॥२४॥
एरण्डपत्रमूलत्वग्भिर्मिता वातनाशिनी ।
पित्ताभिष्यन्दनाशाय धात्रीपिण्डी सुखावहा ॥२५॥
महानिम्बदलोद्भूता पिण्डी वा पित्तनाशिनी ।
शिग्रुपत्रकृता पिण्डी श्लेष्माभिष्यन्द नाशिनी ॥ २६ ॥
निम्बपत्रकृता पिण्डी श्लेष्मपित्तहरा भवेत् ।
त्रिफलापिण्डिका प्रोक्ता नाशने श्लेष्मपित्तयोः ॥ २७ ॥
पिष्ट्वा काञ्जिकतोयेन घृतभृष्टा च पिण्डिका ।
लोध्रस्य हरति क्षिप्रमभिष्यन्दमसृग्भवम् ॥ २८ ॥
शुण्ठीनिम्बदलैः पिण्डी सुखोष्णा स्वल्पसैन्धवा ।
धार्या चक्षुषि संयोगात् शोथकण्डूव्यथाहरा ॥ २९ ॥
[अथ विडालकः] विडालको वहिर्लेपो नेत्रे पक्ष्मविवर्जिते ।
तस्य मात्रा परिज्ञेया मुखालेपविधानवत् ॥ ३० ॥
[स यथा] यष्टीगैरिकसिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः ॥ ३१ ॥
रसाञ्जनेन वा लेपः पथ्याबिल्वदलैरपि ।
कुमारिकाग्निपत्रैर्वा दाडिमीपल्लवैरपि ॥ ३२ ॥
वचाहरिद्रानिम्बैर्वा तथा नागरगैरिकैः ।
दग्ध्वा ससैन्धवं लोध्रं मधूच्छिष्टयुते घृते ॥ ३३ ॥
पिष्टमञ्जनलेपाभ्यां सद्यो नेत्ररुजापहम् ।
लोहस्य पात्रे संघृष्टो रसो निम्बुफलोद्भवः ॥ ३४ ॥
किञ्चिद्घनो बहिर्लेपान्नेत्रबाधां व्यपोहति ।
सञ्चूर्ण्य मरिचं केशराजस्वरसमर्दनात् ॥ ३५ ॥
लेपनादर्मणां नाशं करोत्येष प्रयोगराट् ।
स्विन्नां भित्त्वा विनिष्पीड्य भिषगञ्जननामिकाम् ।
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ॥ ३६ ॥
[अथ तर्पणम्] अथ तर्पणकं वच्मि नेत्रतृप्तिकरं परम् ।
यद्रूक्षं परिशुष्कञ्च नेत्रं कुटिलमाविलम् ॥ ३७ ॥
शीर्णपक्ष्मशिरोत्पातकृच्छ्रोन्मीलनसंयुतम् ।
तिमिरार्बुदशुक्राद्यैरभिष्यन्दाधिमन्थकैः ॥ ३८ ॥
शुष्काक्षिपाकशोथाभ्यां युतं वातविपर्ययैः ।
तन्नेत्रं तर्पणे योज्यं नेत्ररोगविशारदैः ॥ ३९ ॥
दुर्दिनात्युष्णशीतेषु चिन्तायां सम्भ्रमेषु च ।
अशान्तोपद्रवे चाक्ष्णि तर्पणं न प्रशस्यते ॥ ४० ॥
वातातपरजोहीने देशे चोत्तानशायिनः ।
आधारौ माषचूर्णेन क्लिन्नेन परिमण्डलौ ॥ ४१ ॥
समौ दृढावसम्बाधौ कर्त्तव्यौ नेत्रकोशयोः ।
पूरयेत् घृतमण्डेन विलीनेन सुखोदकैः ॥ ४२ ॥
अथवा शतधौतेन सर्पिषा क्षीरजेन वा ।
निमग्नान्यक्षिपक्ष्माणि यावत् स्युस्तावदेव हि ॥ ४३ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

पूरयेन्मीलिते नेत्रे तत उन्मीलयेच्छनैः।
धारयेद्वर्त्मरोगेषु वाङ्मात्राणां शतं बुधः ॥ ४४ ॥
स्वस्थे कफे सन्धिरोगे मात्रापञ्चशतं हितम्।
कृ. च षट्शतं कृष्णरोगे सप्तशतं मतम् ॥ ४५ ॥
दृष्टिरोगेष्वष्टशतमधिमन्थे सहस्रकम्।
सहस्रं वातरोगेषु धार्य्यमेवं हि तर्पणम् ॥ ४६ ॥
स्विन्नेन यवपिष्टेन स्नेहवीर्य्येरितं ततः।
यथास्वं धूमपानेन कफमस्य विरेचयेत् ॥ ४७ ॥
एकाहं वा त्र्यहं वापि पञ्चाहं चेष्यते परम्।
तर्पणे तृप्तिलिङ्गानि नेत्रस्येमानि भावयेत् ॥ ४८ ॥
सुखस्वप्नावबोधश्च वैशद्यं वर्णपाटवम्।
निर्वृत्तिर्व्याधिशान्तिश्च क्रियालाघव मेव च ॥ ४९ ॥
अथ सास्रु गुरु स्निग्धं नेत्रं स्यादतितर्पणम्।
रूक्षमस्राविलं भुग्ननेत्रं स्याद्धीनतर्पणम्।
रूक्षस्निग्धोपचाराभ्यामेतयोः स्यात्प्रतिक्रिया ॥ ५० ॥
[अथ पुटपाकः] अत ऊर्द्ध्वं प्रवक्ष्यामि पुटपाकस्य साधनम्।
द्वौ विल्वमात्रौ मांसस्य पिण्डौ स्निग्धस्य पेषितौ ॥ ५१ ॥
द्रव्याणां विल्वमात्रं तु द्रवाणां कुड़वो मतः।
तदैकत्वं समालोड्य पत्रैरुपरि वेष्टितम् ॥ ५२ ॥
पुटपाकेन तत्पक्त्वा गृह्णीयात्तद्रसं बुधः।
तर्पणोक्तविधानेन यथावदवचारयेत् ॥ ५३ ॥
दृष्टिमध्ये निषेच्यः स्यान्नित्यमुत्तानशायिनः।
स्नेहनो लेखनश्चैव रोपणश्चेति स त्रिधा ॥ ५४ ॥
हितः स्निग्धोऽतिरूक्षस्य स्निग्धस्यापि हि लेखनः।
दृष्टेर्बलार्थमितरः पित्तासृग्व्रणवातनुत् ॥ ५५ ॥
सर्पिर्मांसवसामज्जामेदःस्वाद्वौषधैः कृतः।

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

स्नेहनः पुटपाकश्च धार्य्यो द्वे वाक्शते त्वपि ॥ ५६ ॥
जाङ्गलानां यकृन्मांसैर्लेखनद्रव्यसंयुतैः।
कृष्णलोहरजस्ताम्रशङ्खविद्रुमसिन्धुजैः ॥ ५७ ॥
समुद्रफेनकासीसं स्रोतोजदधिमस्तुभिः।
लेखनो वाक्शतं धार्य्यं तस्यैतावद्धि धारणम् ॥ ५८ ॥
स्तन्यजाङ्गलमध्वाज्यतिक्तकद्रव्यपाचितः।
लेखनात्त्रिगुणो धार्य्यः पुटपाकस्तु रोपणः।
वितरेत्तर्पणोक्तान्तु क्रियां व्यापत्तिदर्शने ॥ ५९ ॥
[अथ अञ्जनम्] अथ सम्यक्कदोषस्य प्राप्तमञ्जनमाचरेत्।
हेमन्ते शिशिरे चैव मध्याह्नेऽञ्जनमिष्यते ॥ ६० ॥
पूर्वाह्णे चापराह्णे वा ग्रीष्मे शरदि चेष्यते।
वर्षास्वनभ्रे नात्युष्णे वसन्ते च सदैव हि ॥ ६१ ॥
लेखनं रोपणं चैव तथा स्यात् स्नेहनाञ्जनम्।
लेखनं क्षारतीक्ष्णाम्लरसैरञ्जनमिष्यते ॥ ६२ ॥
कषायतिक्तरसयुक् सस्नेहं रोपणे मतम्।
मधुरं स्नेहसम्पन्नमञ्जनं तु प्रसादनम् ॥ ६३ ॥
गुटिकारसचूर्णानि त्रिविधान्यञ्जनानि च।
कुर्य्याच्छलाकयाऽङ्गुल्या हीनानि च यथोत्तरम् ॥ ६४ ॥
श्रान्ते प्ररुदिते भीते पीतमद्ये नवज्वरे।
अजीर्णे वेगघाते च नाञ्जनं संप्रशस्यते ॥ ६५ ॥
हरेणुमात्रां कुर्वीत वर्त्तिस्तीक्ष्णाञ्जने भिषक्।
प्रमाणं मध्यमे चार्द्धं द्विगुणं तु मृदौ भवेत् ॥ ६६ ॥
रसक्रिया तूत्तमा तु त्रिविडङ्गमिता हिता।
मध्यमा द्विविडङ्गा स्याद्धीना त्वेकविडङ्गिका ॥ ६७ ॥
वैरेचनिकचूर्णं तु द्विशलाकं विधीयते।
रोपणं त्रिशलाकं स्याच्चतस्रः स्नैहिकेऽञ्जने ॥ ६८ ॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

मुखयोः कुण्ठिता श्लक्ष्णा शलाकाष्टाङ्गुलोन्मिता।
अश्मजा धातुजा वा स्यात्कलायपरिमण्डला॥ ६९॥
ताम्रलोहाश्मसञ्जाता शलाका लेखने मता।
सुवर्णरजतोद्भूता शलाका स्नेहने मता॥ ७०॥
अङ्गुलीव मृदुत्वेन कथिता रोपणे बुधैः।
सायम्प्रातर्वाञ्जनं स्यात्तत्सदा नैव कारयेत्॥ ७१॥
नातिशीतोष्णवाताभ्रवेलायां सम्प्रशस्यते।
कृष्णभागादधः कुर्य्यादपाङ्गं यावदञ्जनम्॥ ७२॥
[अथ वर्त्तिः] शङ्खनाभिर्विभीतस्य मज्जा पथ्या मनःशिला।
पिप्पली मरिचं कुष्ठं वचा चेति समांशकम्॥ ७३॥
छागीक्षीरेण सम्पिष्य वर्त्तिं कृत्वा यवोन्मिताम्।
हरेणुमात्रां संघृष्य जलैः कुर्य्यादथाञ्जनम्॥ ७४॥
तिमिरं मांसवृद्धिञ्च काचं पटलमर्वुदम्।
रात्र्यन्धं वार्षिकं पुष्पं वर्त्तिश्चन्द्रोदया जयेत्॥ ७५॥
इति चन्द्रोदयावर्त्तिर्लेखनी।

पलाशपुष्पस्वरसैः बहुशः परिभाविता।
करञ्जवीजवर्त्तिस्तु दृष्टैः पुष्पं विनाशयेत्॥ ७६॥
[लेखनी वर्त्तिः] सामुद्रफेनसिन्धूत्थशङ्खद्राक्षवल्कलैः।
शिग्रुवीजयुतैर्वर्त्तिः शुक्रादीन् शस्त्रवल्लिखेत्॥ ७७॥
दन्तैर्दन्तिवराहोष्ट्रगोहयाऽजखरोद्भवैः।
शङ्खमुक्ताम्भोधिफेनयुतैः सर्वैः विचूर्णितैः॥ ७८॥
दंत्तवर्त्तिः कृता श्लक्ष्णा शुक्राणां नाशिनी परा॥ ७९॥
नीलोत्पलं शिग्रुवीजं नागकेसरकं तथा।
एतत् कल्ककृता वर्त्तिरतिनिद्रां निवारयेत्॥ ८०॥
[रोपणी वर्त्तिः] तिलपुष्पाण्यशीतिः स्युः षष्टिसंख्या कणा कणाः
जात्याः कुसुमपञ्चाशन्मरिचानि च षोड़श॥ ८१॥

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

सूक्ष्मपिष्टा जलैर्वर्त्तिः कृता कुसुमिकाऽभिधा ।
तिमिरार्ज्जुनशुक्राणां नाशनी मांसवृद्धिकृत् ॥८२॥
एतस्याश्चाञ्जने मात्रा प्रोक्ता सार्द्धहरेणुका ॥ ८३ ॥
इति रोपणी कुसुमिकावर्त्तिः ।

रसाञ्जनं हरिद्रे द्वे मालती निम्बपल्लवाः ।
गोशकृद्रससंयुक्ता वर्त्तिर्नक्तान्ध्यनाशनी ॥ ८४ ॥
इति रोपणी वर्त्तिः नक्तान्ध्यहरी ।

[स्नेहनी वर्त्तिः] धात्रयक्षपथ्याबीजानि एकद्वित्रिगुणानि च ।
पिष्ट्वा वर्त्ति जलैः कुर्य्यादञ्जनं द्विहरेणुकम् ॥८५॥
नेत्रस्रावं हरत्याशु वातरक्तरुजं तथा ॥ ८६ ॥

[अथ रसक्रिया] तुल्यमाक्षिकसिन्धूत्थसिताशङ्खमनःशिलाः ।
गैरिको दधिफेनश्च मरिचं चेति चूर्णयेत् ॥ ८७ ॥
संयोज्य मधुना कुर्य्यादञ्जनार्थं रसक्रियाम् ।
वर्त्मरोगार्मतिमिरकाचशुक्रहरम्परम् ॥ ८८ ॥

[लेखनी रसक्रिया] वटक्षीरेण संयुक्तो मुख्यकर्पूरजं रजः ।
क्षिप्रमञ्जनतो हन्ति कुसुमं तु द्विमासिकम् ॥ ८९ ॥
क्षौद्राश्वलालासङ्घृष्टैर्मरिचैर्नेत्रमञ्जयेत् ।
अतिनिद्रा शमं याति तमः सूर्य्योदयादिव ॥ ९० ॥
इति लेखनी रसक्रिया ।

जातीपुष्पं प्रवालञ्च मरिचं कटुकं वचा ।
सैन्धवं वस्तमूत्रेण पिष्टं तद्घ्राणमञ्जनम् ॥ ९१ ॥
शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः ।
अञ्जनं स्यात्प्रबोधाय सरसोनशिलावचैः ॥ ९२ ॥

[रोपणी रसक्रिया] दार्वी पटोलमधुकं मरिचं पद्मकोत्पलम् ।
प्रपौण्डरीकञ्चैतानि पचेत्तोये चतुर्गुणे ॥ ९३ ॥
विपाच्य पादशेषञ्च सृतं नीत्वा पुनः पचेत् ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

शीते तस्मिन् मधु सितां दद्यात् पादांशिकां नरः ।
रसक्रियैषा दाहास्ररक्तरोगरुजो हरी ॥ ९४ ॥
[रोपणी वर्त्तिः] रसाञ्जनं सर्जरसो जातीपुष्पं मनःशिला ।
समुद्रफेनो लवणं गैरिकं मरिचानि च ॥ ९५ ॥
एतत्समांशमधुना पिष्टा प्रक्लिन्नवर्त्मनि ।
अञ्जनं क्लेदकण्डुघ्नं पक्ष्मणाञ्च प्ररोहणम् ॥ ९६ ॥

अथ रोपणी रसक्रिया ।

गुडूची स्वरसः कर्षः क्षौद्रं स्यान्माषकोन्मितम् ।
सैन्धवं क्षौद्रतुल्यं स्यात् सर्वमेकत्र मर्दयेत् ॥ ९७ ॥
अञ्जयेन्नयने तेन पिल्लार्म तिमिरं जयेत् ।
काचं कण्डूलिङ्गनाशं शुक्लकृष्णागतान् गदान् ॥ ९८ ॥
दुग्धेन कण्डूं क्षौद्रेण नेत्रस्रावञ्च सर्पिषा ।
पुष्पं तैलेन तिमिरं काञ्जिकेन निशान्धताम् ॥ ९९ ॥
पुनर्नवा जयेदाशु भास्कर स्तिमिरं यथा ।
वब्बूल दलनिःक्वाथो लेहो भूतस्तदञ्जनात् ॥ १०० ॥
नेत्र स्रावो व्रजत्याशु मधुयुक्तो नसंशयः ।
हिज्जलस्य फलं घृष्ट्वा पानीये नित्यमञ्जनम् ।
चक्षुः स्रावोपशान्त्यर्थं कार्य्यमेतत् महौषधम् ॥ १०२ ॥

इति रोपणी रसक्रिया ।

[स्नेहनी रसक्रिया] कतकस्य फलं घृष्ट्वा मधुना नेत्रमञ्जयेत् ।
ईषत्कर्पूरसहितं स्मृतं नेत्रप्रसादनम् ।
सर्पिः क्षौद्रञ्चाञ्जनं स्याच्छिरोत्पातस्य भेषजम् ॥ १०३ ॥

इति नेत्रप्रसादनी स्नेहनी रसक्रिया ।

[चूर्णाञ्जनम्] कृष्णसर्पवसाशङ्खकतकाफलमञ्जनम् ।
रसक्रिया सुखं सिध्येदन्धानां दर्शनप्रदा ॥ १०४ ॥
दद्याण्डत्वक्शिलाकाचशङ्खचन्दनसैन्धवैः ।

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri

द्रव्यैरञ्जनयोगोऽयं पुष्पार्मादिविलेखनः ॥१०५॥ लेखनचूर्णम्

कणाच्छाग यकृन्मध्ये पक्वा नेत्रयुगेऽञ्जिता।

अचिराद्धन्ति नक्ताध्यं तद्वत् सचौद्रघूषणम् ॥ १०६ ॥

[लेखनमञ्जनम्] शाणार्द्धं मरिचं द्वौ च पिप्पल्यर्णवफेनयोः।

शाणार्द्धं सैन्धवं शाणं नवसौवीरकाञ्जनम् ॥ १०७ ॥

पिष्टं सूक्ष्मं चित्रायाञ्च चूर्णाञ्जनमिदं शुभम्।

कण्डूकाचकफार्त्तानां मलानाञ्च विशोधकम् ॥१०८॥

[लेखनं चूर्णाञ्जनम्]शिलायां रसकं पिष्ट्वा सम्यगाप्लाव्य वारिणा

गृह्णीयात् तज्जलं सर्वं त्यजेच्चूर्णमधोगतम् ॥ १०९ ॥

शुष्कञ्च तज्जलं सर्वं पर्पटीसन्निभं भवेत्।

विचूर्ण्य भावयेत् सम्यक् त्रिवेलं त्रिफलारसैः ॥११०॥

कर्पूरस्य रजस्तत्र दशमांशेन निक्षिपेत्।

अञ्जयेन्नयनं तेन सर्वदोषहरं हि तत्।

सर्वरोगहरं चूर्णं चक्षुषः सुखकारि च ॥ १११ ॥

[मृद्वञ्जनम्] अग्नितप्तं हि सौवीरं निषिञ्चेत्त्रिफलारसैः।

सप्तवेलं तथा स्तन्यैः स्त्रीणां सिक्तं विचूर्णितम् ॥ ११२ ॥

अञ्जयेत् तेन नयने प्रत्यहं चक्षुषोर्हितम्।

सर्वानक्षिविकारांस्तु हन्यादेतन्न संशयः ॥ ११३॥

इति प्रसादनं चूर्णाञ्जनम्।

त्रिफलाभृङ्गशुण्ठीनां रसैस्तद्वच्च सर्पिषा।

गोमूत्रमध्वजाक्षीरैः सिक्तो नागः प्रतापितः।

तच्छलाका हरत्येव सर्वान् नेत्रभवान् गदान् ॥ ११४ ॥

[शलाका दृष्टिप्रसादनी] गतदोषमपेतास्त्रं पश्यन्तं सम्यगभ्रसि

प्रक्षाल्याक्षि यथादोषं कार्य्यं प्रत्यञ्जनं ततः ॥११५॥

मर्चा निर्वृत्तिं दोषेऽक्षि धावनं संप्रयोजयेत्।

प्रत्यञ्जनं तीक्ष्णतप्ते नेत्रे चूर्णं प्रसादनम् ॥ ११६ ॥

CC0, Gurukul Kangri Collection, Haridwar. Digitized by eGangotri

[स यथा] शुद्धे नागे द्रुते शुद्धं तुल्यं सूतं विनिःक्षिपेत् ।
कृष्णाञ्जनं तयोस्तुल्यं सर्वमेकत्र चूर्णयेत् ॥ ११७ ॥
दशमांशेन कर्पूरं तस्मिंश्चूर्णे प्रदापयेत् ।
एतत् प्रत्यञ्जनं नेत्रगदजिन्नयनामृतम् ॥ ११८ ॥

इति नयनामृतं प्रसादनं चूर्णाञ्जनम् ।

जयपालभवां मज्जां भावयेन्निम्बुकद्रवैः ।
एकविंशतिवेलं तु ततो वर्त्तिं प्रकल्पयेत् ॥ ११९ ॥
मनुष्यलालया घृष्ट्वा ततो नेत्रे तथाञ्जयेत् ।
सर्पदष्टविषं जित्वा संजीवयति मानवम् ॥ १२० ॥

इति विषहरी वर्त्तिः ।

आयुर्वेदसमुद्रस्य गूढार्थमणिसञ्चयः ।
ज्ञातः कैश्चिद्बुधैस्तैस्तु कृता विविधसंहिताः ॥ १२१ ॥
किञ्चिदर्थं ततो नीत्वा क्रियते संहिता मया ।
कृपाकटाक्षनिक्षेपमस्यां कुर्वन्तु साधवः ॥ १२२ ॥
विविधमदार्त्तिदरिद्रनाशं हरिरमणीव करोति योगरत्नैः ।
विलसतु शार्ङ्गधरस्य संहिता सा कविहृदयेषु सरोजनिर्मलेषु १२३

इति श्रीदामोदरसूनुना शार्ङ्गधरेण विरचितायां
संहितायां चिकित्सास्थाने नेत्रप्रसादनकर्म-
विधिरध्यायः । समाप्तेयं संहिता ।

---

मुकृत्वा पारीतलं घृष्टवा चक्षुषोर्यदि दीयते
जातरोगा विनश्यन्ति तिमिरं रिन्तथैव च १२१

रक्तविरै..तद्धरितिमिरारोग्यपोह तोति

पाठोऽपि कुत्रचिदस्ति

CC0, Gurukul Kangri Collection, Haridwar, Digitized by eGangotri